॥ श्रीः ॥

श्रीमद्वादिराजीयग्रन्थमालिकायां

अष्टमं पुष्पम्



॥ श्रीहयवदनाय नमः ॥

श्रीमद्भाविसमीरवादिराजपूज्यपादविरचितं

# विवरणव्रणम्

श्रीमद्वादिराजीयग्रन्थप्रकाशनसमित्या संशोध्य
उडुपि मेजिष्टिक् मुद्रणालये मुद्रापयित्वा प्रकाशितम् ।
श्रीरजतपीठपुरम्



शा० शक १८७७ इ. स. १९५५



Price 1-4-0 मूल्यं १-४-०



MAJESTIC P ESS, UDIPI.

# श्रीमद्वादिराजीयग्रन्थप्रकाशनसमितेः पोषकाः

## अष्टमठाधीशाः

१ श्री पुत्तिकामठाधीश श्री१०८ श्री सुधीन्द्रतीर्थ श्रीमच्चरणाः
२ श्री काणियूरुमठाधीश श्री१०८ श्री विद्यासमुद्रतीर्थ श्रीमच्चरणाः
३ श्री शीरूरुमठाधीश श्री१०८ श्री लक्ष्मीन्द्रतीर्थ श्रीमच्चरणाः
४ श्री पुत्तिकामठाधीश श्री१०८ श्री सुज्ञानेन्द्रतीर्थ श्रीमच्चरणाः
५ श्री कृष्णापुरमठाधीश श्री१०८ श्री विद्यारत्नतीर्थ श्रीमच्चरणाः
६ श्री पेजावरमठाधीश श्री१०८ श्री विश्वेशतीर्थ श्रीमच्चरणाः
७ श्री काणियूरुमठाधीश श्री१०८ श्री विद्यावारिनिधितीर्थ श्रीमच्चरणाः
८ श्री सोदामठाधीश श्री१०८ श्री विश्वोत्तमतीर्थ श्रीमच्चरणाः
९ श्री अद्मारुमठाधीश श्री१०८ श्री विबुधेशतीर्थ श्रीमच्चरणाः
१० श्री फलिमारुमठाधीश श्री१०८ श्री रघुवल्लभतीर्थ श्रीमच्चरणाः

## इतरमठाधीशाः

१ श्री भण्डारकेरिमठाधीश श्री१०८ श्री विद्यामान्यतीर्थ श्रीमच्चरणाः
२ श्री भीमसेतुमठाधीश श्री१०८ श्री रघुतिलकतीर्थ श्रीमच्चरणाः

## अस्यास्समितेस्सहायकारिणः

१ श्री चित्रापुरमठाधीश श्री विद्यापूर्णतीर्थ श्रीमच्चरणाः
२ श्री अगुण्डि अनन्तराव्, कृष्णराव् निवृत्तन्यायाधीशाः, महाशयाः बिजापुर.
३ श्री के. सीतारामराव् महाशयाः मद्रपुरं श्री गोविन्दभवनं
४ श्री उद्यावर वादिराजाचार्य महाशयाः
५ श्री मेजिष्टिक् मुद्रणालयाधिकारिणः उडुपि राघवेन्द्र राव् महाशयाः

॥ श्रीः ॥

श्रीमद्वादिराजीयग्रन्थमालिकायां

अष्टमं पुष्पम्

॥ श्रीहयवदनाय नमः ॥

श्रीमद्भ्रान्तिसमीरवादिराजपूज्यपादविरचितं

# विवरणव्रणम्

श्रीमद्वादिराजीयग्रन्थप्रकाशनसमित्या संशोध्य
उडुपि मेजिष्टिक् मुद्रणालये मुद्रापयित्वा प्रकाशितम् ।
श्रीरजतपीठपुरम्



## विशेषसूचना

अयं ग्रन्थः समाप्तो वा न वेति महती संशीतिरस्त्यस्माकम् । यतो हि विवरणग्रन्थस्यादितः प्रथमवर्णकेऽल्पभाग एव दूषितः । ग्रन्थान्ते मङ्गलाचरणञ्च नोपलभ्यते । अतो न समाप्तः । परमुपरीतनभागो नोपलब्धः इत्येका कोटिः । स्थालीपुलाकन्यायेनोत्तरग्रन्थस्यापि दूषणं सुज्ञेयमिति दूषणमार्गप्रदर्शनमेवात्रकृतम् । अतस्समाप्तो ग्रन्थ इत्यपरा कोटिः । इदमेव न्याय्यमिति च भाति । सर्वेषूपलब्धेषु मूलकोशेष्वेकरीत्येयदेवास्ति । अतः पूर्णोऽयं ग्रन्थ इति ॥

शा० शक १८७७ इ. स. १९५५



Price 1—4—0 मूल्यं १—४—०

॥ श्रीः ॥

# विज्ञप्तिः

अयि भोः महाशयधौरेयाः विषयमिमं पात्रीकुरुत नेत्रयोरथवा श्रोत्रयोः। यत्सत्यमुच्यते। कदाचिद्विनोदगोष्ठ्यां मिलितानामस्माकं पुरतः श्रीश्रीमल्लक्ष्मींद्र-तीर्थश्रीमच्चरणेष्वपि सन्निहितेषु प्रासङ्गिकोऽयं विषयस्समागतः। यद्भाविसमीर-श्रीमद्गुरुवरेण्यानां ग्रन्थाः प्रकाशनीया इति। अस्य विषयस्य निर्देष्टारः श्रीमच्चरणा एव। वयं तु तत्रासंभावितमिदमस्मादृशैरिति मनसि निश्चित्यापि महतां पुरतः प्रसक्तस्य कस्यापि विषयस्य भङ्गो न कार्य इति लौकिकीं नीतिमनुरुध्याङ्गयकार्ष्म। पुनरपि तैरेव श्रीमच्चरणैः तदात्व एव पञ्चानामस्माकमेका समितिश्च निर्मिता। तदाऽप्यस्माभिः पञ्चभिरुपेतेयं समितिः श्वो वा परश्वो वा पञ्चतां यास्यत्येवेति निश्चि-न्वानैरपि पूर्ववदेवाङ्गयकारि। परमिदमित्थं भवतीति मनस्यपि नालोचि। अथा-पि तदानीं तेषां श्रीशीरूरुमठीयश्रीमच्चरणानां वाण्यां भाविसमीरश्रीमद्गुरुवरेण्यानां सन्निधिरासीदिति मन्दबुद्धिभिरस्माभिरिदानीं संभाव्यते। दैवी विचित्रा गतिः। क्व वयं मन्दभाग्याः? दारिद्र्योपहताः समितिप्रविष्टाः। क्वेदं श्रीमद्गुरुवरेण्यानां मुद्रणद्वारा ग्रन्थप्रकाशनम्। इयमास्माकीना प्रवृत्तिः "क्व सूर्यप्रभवो वंशः क्व चा-ल्पविषया मतिः। तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरं" इति महाकवीनामुक्तिं स्मा-रयति। लोके काचन प्रथाऽस्ति। समयविशेषे किञ्चिच्छुभमशुभं वोक्तं चेत्तत् "तथाऽस्त्विति" ति वक्त्री काचिदस्तुदेवताऽस्तीति। सेदानीमस्माकं सर्वात्मना सत्याऽऽसीत्। आस्ताम्। अनेनास्मदशक्यकार्यसमापनेन श्रीमद्गुरुवरेण्यानां तदीयचरणरेणुशरणेषु कीटकल्पेष्वस्मासु कृपा सर्वथाऽप्यस्तीत्यनुमिनुमः।

श्रीमद्गुरुवरेण्यग्रन्थेषूर्वरितस्य लक्षाभरणाख्यमहाभारतव्याख्यानस्य मुद्रणभारः तदीयपीठाधिरूढैः श्रीसोदामठाधीशश्रीविश्वोत्तमतीर्थश्रीमच्चरणैः स्वयमेवोढ्वाऽस्मासु बहूपकृतम्।

एतन्मुद्रणावसरे लिखितमूलपुस्तकदानेनोपकृतवतो मान्यान् सर्वथा न विस्मरामः। परं प्रत्युपकर्तुमसमर्थेयं समितिस्तेषां नामान्यधस्तात्प्रदर्शितरीत्या प्रकटयति प्रार्थयति च देवदेवं स एव तेभ्यः श्रेयो दद्यादिति।

तानि च नामानीत्थम्—

तत्रैकं मूलपुस्तकं श्रीसोदामठाधीशश्रीविश्वोत्तमतीर्थश्रीमच्चरणैरनुगृहीतं तौळवाक्षरमयम् । पुनरन्यत्तैरेव दापितं बालबोधाक्षरमयं पुस्तकम् ।

तृतीयं महीशूर, यम् ए इतिपदवीधराणां यचू सुब्बरायाचार्याणां पुस्तकम् ।

चतुर्थं श्रीविद्वद्दित्युपाह्वतिरुपति ए. गुण्डाचार्याणां पुस्तकम् । प्रायस्सर्वाणीमानि पुस्तकान्येकमूलादुद्धृतानीव भान्ति । अबद्धबहुलानि । कचित्कचिच्छोधयितुमप्यशक्यानीति निवेदयितुं खिद्यते अस्मदीयं चेतः । अथापीदृशानामपि मूलपुस्तकानामन्यत्र दुर्लभत्वेनैतान्यपि दापयित्वाऽस्मासु दातृभिर्बहूपकृतमित्युक्तमपि नातिशयोक्तिकोटिमाटीकेत ।

एवं लब्धा गुरुवरेण्यानां ग्रन्थाः कथंकथमपि प्राकाश्यं नीताः । इतोऽपि येषां महानुभावानां सविधे श्रीमद्गुरुवरेण्यानां ग्रन्था: एतावत्पर्यन्तमनुपलब्धास्संति चेत्तानस्माकं प्रदाय पुनरप्यत्रशिष्टानां मुद्रणादिकार्ये प्रोत्साहयेयुश्चेत्तेषु गुरुराजकटाक्षपात्रता भूयादिति पुनःपुनर्देवदेवं प्रार्थयामः ।

अत्र सर्वात्मना साहाय्यानुग्रहकरणेन देवदेवेन श्रीवेदव्यासेन कीटद्वारा राज्यपरिपालनमिवाष्टमठाधीशैः इतरमठाधीशैश्चास्मन्मुखेनेदं कर्म कारितमिति भवत्पुरतः स्फुटीकर्तुं सङ्कल्पितकृतकार्याणामस्माकं चेत मोमुदीति ।

तथाऽऽदित आरभ्यास्माभिरेकवारं द्विवारं त्रिवारं वा शोध्यपत्रेषु परावर्तितेष्वपि किमपि वैमनस्यमकृत्वा यथासमयं नियम्यान् स्वकीयानुयोज्यावसानपर्यन्तमस्मदुपकारिणः मैजिष्टिक् प्रेस् मुद्रणाधिकारिणः श्रीकृष्णः श्रेयआद्यभिलषितप्रदानेनानुगृण्हात्विति इयं समितिः प्रार्थयते.

इति सहृदयप्रेमाकांक्षी,

कार्यदर्शी,

श्रीवादिराजीयग्रन्थप्रकाशनसमितेः

ए. नारायण तन्त्री, द्वैतवेदान्तविद्वान्, शिरोमणिः

पण्डितः संस्कृतमहापाठशाला उडुपि.

॥ श्रीः ॥

# उपोद्घातः

स्वस्ति "सुखं हि दुःखान्यनुभूय शोभते घनान्धकारेष्विव दीपदर्शनम्" इति महाकवीनां वचः सर्वथा सत्यमिति पदेपदे अनुभूयतेऽस्माभिः । यत्कदाचिच्छ्रीमन्महाभारततात्पर्यनिर्णयस्य प्रवचनसमये क्वचिदावश्यकतया व्याख्यानान्वेषणवेलायां जनार्दनभट्टीयव्याख्यानदर्शनेऽपि मनसस्तृप्त्यभावात्सर्वप्रमितां श्रीमद्भाविसमीरगुरुवरेण्यानां श्रीमद्वादिराजतीर्था इति सुगृहीतनामधेयानां व्याख्यां तद्गतं पदार्थविवरणस्वारस्यं च क्षणे क्षणे दृष्ट्वाऽपि त्यक्तुमक्षमाः तदीयव्याख्यानसमार्जनाय प्रयतमानाः कृच्छ्रेण श्रीमददमारुमठीयमेकं लिखितपुस्तकं दृष्ट्वाऽपि तस्यापूर्णतामवलोक्य व्यग्रचित्ताः स्वयं समग्रस्य ग्रन्थस्य मुद्रणादिना प्रकाशने शङ्कितचित्ताश्च कदाचिदास्माकविदुषां समागमसमये "स्निग्धजनसंविभक्तं हि दुःखं सह्यवेदनं भवति" इति कविसमयमनुरुध्य तेषां पुरतः मनसि विद्यमानं प्रकटनेच्छुत्वं व्यदर्शयाम । ते त्वस्मदीयत्वादस्मन्मनोव्याकुलतापनोदाय नवं कञ्चन मार्गं दिदर्शयिषव इव श्रीमतां भाविसमीराणां प्रेरणयेव च श्रीमतामष्टानां मठाधीशानां तदानीं तत्र सन्निहितानां श्रीमद्भण्डारिकेरिमठाधीशानां च साहाय्यसंपादनेन सुशकमिदं प्रकटनकार्यमिति न्यवेदयन् । अनेनामीषां सूचनेन प्रोत्साहिता इव वयं पूर्वोक्तानां साहाय्यसंपादनं भवद्भिरेव कार्यमिति तेषां समितिमपि निर्माय तदानीमेव भवद्भिः प्रतिज्ञा कर्तव्येति नियमं तेषां गले रज्जुमिवाबध्नीम ।

एवं प्रतिज्ञासमयेन श्रीमत्सु गुरुवरेण्येषु तदीयं कार्यमिति गौरवेण च प्रवृत्ताः समितिप्रविष्टा इमे विद्वांसः सर्वोपयोगीदं कार्यं, गुरुवरेण्यानामनुग्रहार्थमिति मनसि निश्चित्य साहाय्यसंपादनाय याचितुं प्रवृत्ताः । तन्मध्ये किमप्याश्चर्यमिव समजनि । यत् "निमित्तमात्रं भव सव्यसाचिन्" इति गीतावचनमिवामीषां विदुषां याचनं महोदाराणां सत्कार्यबद्धश्रद्धानां श्रीमदाचार्यपीठमलङ्कुर्वतां तेषां पुरतोऽस्मदीयं सूचनमेवासीत् । ते तु स्वयमेव विना निर्बन्धमतिहर्षेण समित्यपेक्षितादप्यधिकं धनसाहाय्यं मुक्तकंठं दिशाम इत्याज्ञाप्यासिन्कर्मणि तान्विदुषः प्रोत्साह्य च

प्रेषयन् । वयं तु गुरुसार्वभौमानां मनसीदं कार्यमायातमित्यनेन व्यज्ञासिष्म आस्ताम् ।

अनया समित्यैतावत्पर्यन्तं प्रकाशितेषु पुष्पेषु प्रथमं यन्महाभारततात्पर्य-निर्णयाख्यं पुष्पमिदं प्रमेयप्रतिपादकेषु प्रथमतो गणनीयं यथा तद्वदेव तदीयव्या-ख्यानेष्विदं भावप्रकाशिकाख्यं व्याख्यानमस्मद्गुरुवरेण्यैर्विरचितमपि रत्नप्रायमित्यत्र न काचित्संशीतिर्द्रष्टॄणाम् । यतोऽत्र विवृताः विषयाः प्रत्यक्षतो दृष्टाऽपि तथा वक्तुमशक्या इव भान्ति । तथा वक्तारः केऽपि न स्युरित्येवास्मन्मनीषा । स्थालीपुलाकन्यायेनैको विषयः द्रष्टॄणां पुरतो निक्षिप्यते । श्रीमत्तात्पर्यनिर्णयस्य द्वाविंशत्तमेऽध्याये षडधिकषष्ठ्युत्तरद्विशततमपद्यस्य "वने गिरीशेन च यत्तपः कृतं" इत्यस्य प्रसिद्धेषु व्याख्यानेषु सर्वेषु दृष्टेष्वपि मनः प्रसादमलभमानाः वयमिदमीयव्या-ख्यानदर्शनेन प्रसन्नचित्ताः पुलकितसर्वाङ्गा अभूमेति. एवमस्मदनुभवानुसारेण द्रष्टार-स्सर्वेऽपि प्रसन्नचित्ता भवेयुरित्यत्र केऽपि न विप्रतिपद्येरन् । एवं प्रतिविषयमपि विचारितेऽपूर्वमेव व्याख्यानकौशलं प्रतिभाति । तत्सर्वं प्रदर्शयितुं नायं समय इति विरम्यते । अथवा नैतस्मिन्नाश्चर्यमस्ति । यतो हि सर्वज्ञतुल्येष्वमीषु व्याख्यान-कौशलमित्यस्मदुक्तिरेवाभासतामेति । नहि तात्पर्यनिर्णयव्याख्यान एवेदं कौशलम् । किंतु द्वितीयपुष्पव्याख्या गुर्वर्थदीपिकाऽपि दरीदृश्यताम् । तत्राप्येकैकस्मिन्विषये दृष्टिर्निक्षिप्यताम् । प्रथमाध्यायद्वितीयाधिकरणटीकाव्याख्यानावसरे "एको रुद्रो न द्वितीयाय तस्थे" इत्यादिश्रुतेरर्थविवरणं, तथा द्वितीयाध्याये प्रथमपादे चतुरध्या-यानां प्रत्येकं चतुरध्यायार्थत्वं, प्रत्येकं पादानां पादचतुष्टयार्थत्वं यथा विवृतं "रुद्रा-दीनां सकाशाद्विष्ण्वादीनामेवाऽऽप्तता" इत्यत्रत्यमपि विवरणमस्मन्मनो नर्तयतीति द्रष्टार एवात्र प्रमाणम् । सर्वत्राप्येवमतिशयस्य दृश्यमानत्वेन प्रत्येकं दर्शयितुं न वयं प्रभवामः । एवं चतुर्थपुष्पस्य व्याख्या गुर्वर्थदीपिकाऽपि ।

एवं मुद्रितेष्वष्टसु पुष्पेषु केषाञ्चन पुष्पाणां स्वारस्यग्रहणाय बहुलं शास्त्र पाण्डित्यापेक्षणात् द्वितीयं चतुर्थं सप्तममष्टममिति पुष्पाणि विदुषामेवात्युपयुक्तानि । प्रथमं तृतीयं पञ्चमं पठितॄणां पण्डितानामपण्डितानांच सर्वेषामत्युपयोगि ।

उपन्यासशैलीमजानतां परं तज्जिज्ञासूनां मार्गदर्शकमिव विद्यमानं षष्ठम् । सप्तममष्टमं तु मतांतरनिरसनेच्छूनामतिकौतुकावहमन्यादृशीमेव निरसनपरिपाटीं प्रदर्शयत् कस्य मनो न हर्षयेत् । तत्र शङ्कराचार्यकृतभाष्यस्य व्याख्यानरूपा तच्छिष्य वरेण पद्मपादाचार्येण रचिता पञ्चपादिका । तस्याः विवरणरूपं विवरणम् । तत्रत्य-मङ्गलपद्यमारभ्य प्रायशः प्रतिविषयं खंडनरूपं परेषां चपेटिकायमानमिदं विवरण-व्रणं नामाष्टमं पुष्पम् ॥

अत्रादितः शोधनादिविषये स्वीयं कार्यं परित्यज्य सहकारेण कृत यत्नानां समितिप्रविष्टानां पण्डितप्रवराणां न्यायविद्वान् तर्ककेसरीत्यादिविरुदभाजां श्रीमन्मध्वसिद्धान्तप्रबोधिनीमहापाठशालायां वेदान्तप्रधानपण्डितानां पडुमुन्नूरु नारायणाचार्याणां तथा पण्डितरत्नं इत्यादिविरुदभाजां चन्द्रिकापाठशालाप्रधान-पण्डितानां कट्टे श्रीनिवासाचार्याणां, तथा वेदान्तविद्वान् शिरोमणिरिति विरुद-भाजां श्रीमन्मध्वसिद्धान्तप्रबोधिनीमहापाठशालायां वेदान्तपण्डितानां अग्रहार नारायणतन्त्रिणां च श्रेयोदानेन श्रीगुरुवरांतर्गतौ श्रीकृष्णविठ्ठलावनुगृण्हीता-मित्यनुक्त्वा न स्थातुमुत्सहते मनः । तथा मध्ये मध्ये साहाय्यदानेन कृतोपकारान्-साहित्यशिरोमणिसाहित्यभूषण इति विरुदभाजः पाठशालायां साहित्यप्रधान पण्डितान् वि. श्रीनिवासभट्टेति सुगृहीतनामधेयानपि न विस्मर्तुं प्रभवामः । तत्रापि मुद्रणालयं प्रति साहस्रीतोऽप्यधिकवारं यातायातादिना शोधनादिकर्मण्यत्युपयुक्त-कार्यकारिणां कार्यदर्शिपदमधिरूढानां अ. नारायणतन्त्रिणां सकलविपत्परिहार-पूर्वकं श्रीमद्गुरुवरेण्याः भाविसमीराः श्रीवादिराजश्रीमच्चरणाः श्रीकृष्णविठ्ठलौ च क्षणे क्षणे कृपाकटाक्षवीक्षणेनानुगृण्हन्त्विति सर्वथा प्रार्थयामः ।

अत्रेदमेकमनुक्त्वा न स्थातुमुत्सहतेऽस्मदीयं मनः । यत्सप्तमाष्टमपुष्प-शोधन कर्मण्येकाकितया प्रवृत्तेषु प्रधानाध्यक्षेषु तेषामेव तनूजन्मा गोविन्दाचार्य इति सुगृहीतनामधेयस्स्वतातपादानां शोधनकर्मणि सर्वात्मना साहाय्यमकार्षीदिति तं बालमपि वर्धिष्णुमस्मदाराध्यौ श्रीकृष्णविठ्ठलौ वर्धयतामुत्तरोत्तरम् । आयुरारोग्या-दिदानेन पालयतामिति च तावेव देवौ प्रार्थयामः। पितुरनत्रमो भूयादिति चाशास्महे।

किंच विवरणत्रणमुद्रणाय समितौ प्रवृत्तायां यात्रार्थमागता महाशयधौरेया: असुण्डीत्युपपदधारिण: कृष्णराव् अनन्तराव् इति सुगृहीतनामधेया: इदं विवरणत्रणमुद्रणकार्यमुपश्रुत्य महामनस्तया पञ्चशतपरिमितं रूप्यकं प्रदाय वहूपकृतवन्त: मुद्रणकार्याय। यद्यपीत: पूर्वमपि कृतवहुधर्मकार्याणां तत्रैव वद्धश्रद्धानां नेदमाश्चर्यम्। तथाऽप्यत्रत्यानां तदीयपरिचयशून्यानां परं तदिदं कार्यं श्लाघार्हमित्यभिनन्दामो वयम्। तान् श्रीकृष्ण: श्रेयसा योजयत्विति चाशास्महे ॥

अनुकूले दयासिन्धौ हयग्रीवाभिधे प्रभौ।
अरिर्मित्रं विषं पथ्यं भवेन्नास्त्यत्र संशय: ॥ १ ॥

श्रीशस्ते सुश्रियं दद्यादायुर्वायुसुतप्रिय: ।
भूमिं ते वामनो दद्यादरीन्हन्तु नृकेसरी ॥ २ ॥

श्रीरूप्यपीठपुरम्।
शा. शके. १८७७ तमे
मन्मथाब्दीय आश्वयुज
कृष्णद्वादश्यां भार्गवे

श्रीमत्परमहंसपरिव्राजकाचार्यवर्यत्वादिबिरुदाङ्किता:
श्रीमज्जगद्गुरु श्रीमदानन्दतीर्थ भगवत्पादाचार्य
पीठाधिरूढा:
श्री १०८ श्रीमल्लक्ष्मीन्द्रतीर्थश्रीमच्चरणा:
श्रीशीरूरुमठाधीशा:

॥ श्रीः ॥

॥ श्रीमध्वेशाय नमः ॥

॥ श्रीमद्वाविसमीरवादिराजगुरुभ्यो नमः ॥

श्रीमद्वादिराजीयग्रन्थमालिकायां

अष्टमं पुष्पम्

श्रीमद्वादिराजपूज्यचरणविरचितं

# विवरणव्रणम्

श्रीहयग्रीवाय नमः ॥ नमोऽस्तु हरये युक्तिगिरये निर्जितारये । समस्तगुरवे कल्पतरवे परवेदिनाम् ॥ १ ॥ हयग्रीवाय देवाय ज्वलद्भावाय दुर्हृदाम् । त्रयीगेयाय निर्माय जनध्येयाय ते नमः ॥ २ ॥ व्यासं शुभगुणावासं श्रीशं नौमि सतां वशम् । योऽशङ्को मां स्वहृल्लेशं दासं दर्शयतीदृशम् ॥ ३ ॥ सन्मुख्यगतये श्लाघ्यकृतये वीतभीतये । स्वर्वाग्मिपतये पूर्णमतये यतये नमः ॥ ४ ॥ ध्यानी यत्कृपया ज्ञानी क्षोणी सा शास्त्रसंपदाम् । वाणी शुभगुणश्रेणी प्रीणातु हितकारिणी ॥ ५ ॥ उमा परिहृतात्मीयभ्रमा सरसविभ्रमा । रमारमणतत्त्वानि प्रमापयतु मां क्रमात् ॥ ६ ॥ हयग्रीवपदाम्भोजमकरन्दमधुव्रतः । श्रीव्यासकरुणालेशोद्बुद्धधीर्मध्वकिंकरः ॥ ७ ॥ वादिराजो यतिः सोऽहमद्वैतागमकर्दमे । गच्छन्पथि क्षिप्तपदस्तच्छुध्दै स्पृहयन्मुहुः ॥ ८ ॥ कुर्वे विवरणं तीव्रव्रणं दुस्तत्त्वदीपनम् । तत्त्वदीपनमेकोनपादिकां पञ्चपादिकाम् ॥ ९ ॥ ×(वि. पुट ७. पङ्क्ति २) *पालने विमलसत्त्ववृत्तये जन्मकर्मणि रजोजुषे लयं । तामसाय जगतः पराकृतद्वैतजालवपुषे नमः सते *इति विवरणकारस्याऽऽद्यं मङ्गलपद्यम् ।

---

×भामत्यादिव्याख्यानवकोपेत श्रीब्रह्मसूत्रशाङ्करभाष्यस्य The Metropolitan Printing & Publishing House Ltd. Calcutta (1933) इत्यत्र मुद्रितपुस्तके विद्यमानपुटपङ्क्तिसंख्या अत्र सङ्गृहीता इति सादरं निवेदयामः । किंचात्र तत्तद्ग्रन्थसूचनदशायां पञ्चपादिकायाः "पं" इति विवरणस्य "वि" इति तत्त्वदीपनस्य "त" इत्याद्याक्षराणि सङ्गृह्य तत्तद्ग्रन्थनामनिर्देशः क्रियत इति सहृदयैराकलनीयम् ॥

तत्र व्याचिख्यासितब्रह्ममीमांसाशास्त्रेण परेण "जन्माद्यस्ये"ति सूत्रमनुसृत्य जन्मैवादौ वक्तव्यम् । नतु पालनम् । तस्य तदननुगुणत्वात् । नच शोभनत्वात्पालनस्याऽऽदौ ग्रहणम् । रघुवंशे तृतीयसर्गे "कुमारजन्मामृतसंमिताक्षर"मित्युक्त्या जन्मन एव परमशोभनत्वात् । अजातस्य कार्यस्य पालनासंभवेन पालितस्य च पुनर्लयात्प्राग्जन्मासंभवेन चायुक्तत्वाच्च । नच पुराणप्रक्रियामाश्रित्यैवमुक्तमिति वाच्यम् । तत्रापि "जन्माद्यस्य यतोऽन्वयात्" "सृजत्यवत्यत्ति न तत्र संज्जते" "सृजस्यवस्यत्सि न तत्र सज्जस" इत्यादौ जन्मन एवादित्वेन स्मर्यमाणत्वात् । क्वचिद्गुणपरिगणनायां सत्त्वगुणस्यादौ कथनं तु तस्य प्रथमोत्पन्नत्वाच्छुभगुणत्वाच्च । न तु तदुपाधिकपालनस्यादित्वात् । तथासति "यतो वा इमानि भूतानि जायन्त" इत्यादिश्रुतिविरुद्धस्यायुक्तस्य चार्थस्य कथनेन स्मृतेरप्रामाण्यप्रसङ्गात् । उक्ते द्वितीयसूत्रे जन्मादित्वस्य त्वयाऽप्युनिर्वाह्यत्वापाताच्च । (त. पु. ७ प. २७) * कारणत्वाक्रांतं ब्रह्म नमस्कार्यमित्याह * इति कारणरूपस्यैव ब्रह्मणः प्रस्तावितत्वात् । उत्पादकस्यैव कारणशब्दार्थत्वाच्च । पुराणप्रक्रियया विधिरुद्रयोर्जगत्कर्तृत्वसंहर्तृत्वे आशंक्य (त. पु. ८ प. १५) * तयोः कार्यत्वेन निखिलसर्जनसंहरणसामर्थ्याभावात् * इति पुराणप्रक्रियायास्त्वयैवोपेक्षितत्वेनोपेक्षितबहिरङ्गतदनुसरणाद्प्यावश्यकांतरङ्गब्रह्ममीमांसानुसरणस्यैव न्याय्यत्वाच्च । एतेन शैवपुराणानां तामसत्वेनाप्रामाण्यं विष्णुव्यापारस्यानिंदितत्वेन वैष्णवपुराणानां प्रामाण्यं परेणैव निरूपितम् । न च "पाठक्रमादर्थक्रमो ज्यायानि"ति न्यायेन पाठक्रममुपेक्ष्य * जन्मकर्मणि रजोजुषे * इत्येवादौ योज्यमिति वाच्यम् । तथासति कथंचिदुपपन्नैतादृशयोजनाया अप्रदर्शनेन तत्वदीपनस्यातत्वदीपनत्वप्रसङ्गात् ॥ (१) * तामसाय * इति चाश्लीलम् । न च तमःसंबन्धि तामसमिति तस्यार्थ इत्याशास्यम् । तथाऽप्यघसंबन्धीतिवदुक्तदोषापरिहारात् । "सौवर्णं मुकुट"मितिवत् रजस्तमोनिमित्तमनोमालिन्यादिविकारवत्स्वेव "मध्ये तिष्ठन्ति राजसाः" "अधो गच्छन्ति तामसा"इत्यादौ बहुशस्तत्पदप्रयोगदर्शनाच्च । त्वं तामस इत्युक्तेऽभियुक्तस्यैव मनस्तापदर्शनाच्च ॥ (२) (त. पु. ८ प. १९) * "सर्वकर्मे"त्यादिश्रुतेः कारणरूपं तादृक्मित्या-

शंक्य तात्पर्यलिङ्गानुगृहीतनिर्विशेषवस्तुप्रतिपादकवेदवचनविरोधान्नैवमित्याह "पराकृते"ति * इति पूर्वोत्तरविशेषणे सङ्गमयता त्वयैव कारणरूपं नमस्कार्यमतात्त्विकमित्युपपादितम्। तथा च (त. पु. ७ प. २४) * ननु किं नमस्कार्यं सत्? अचेतनं चेतनं वा? आद्ये न नमस्कार्यता घटादिवत्। द्वितीयेऽपि किं जीवात्मा? उत ब्रह्म? प्रथमे किं नमस्कर्तुरनन्यत्? उतान्यत्? नाद्यः। नमस्कर्तृनमस्कार्यभावस्यैकस्मिन्नयोगात्। द्वितीये किं तात्त्विकमुतातात्त्विकम्। आद्येऽद्वैतक्षतिः। अंत्ये न सच्छब्दं स्यात् * इत्यतात्त्विकत्वपक्षोक्तसच्छब्दायोगाख्यदूषणं तत्रापि समम्। शुद्धं नमस्कार्यमिति तु (त. पु. ७ प. २६) * तस्य पूर्णत्वान्न नमस्कर्तृनमस्कार्यता * इति वदता त्वयैव त्याजितम्। अन्यदशुद्धमतात्त्विकमेवेति कथं न सच्छब्दप्रयोगायोगतादवस्थ्यम्। व्यावहारिकसत्त्वादिपरतायां तु प्रागाशंकितातात्त्विकस्यैव नमस्कार्यत्वसंभवाद्संबद्धः पूर्वोत्तरो ग्रन्थसंदर्भः स्यात्। (त. पु. ७ प. २५) * नमस्कर्तृनमस्कार्यभावस्यैकस्मिन्नयोगात् * इति त्वयैवोक्तत्वेन च पुनः "पराकृतद्वैते"ति द्वैतं निरस्य पुनर्द्वैतसापेक्षनमस्कारकरणं च पूर्वोत्तरविरुद्धम्। पारमार्थिकीं दशामवलंब्य तच्चेत्तामेव दशामवलंब्य भेदसापेक्षं क्रियारूपमेतदपि न स्यात्। वृथैवार्धजरतीयाश्रयणस्य बुद्धिमता त्याज्यत्वात्। एकस्मिन्विशेष्ये विरुद्धप्रकारद्वयावलंबनस्य च युगपदसंभवात्। विशेषणविशेष्यक्रियासंबन्धस्यावश्यकत्वाच्च। नमस्कारप्रकरणे चालैकदशावलंबनस्यैवोचितत्वाच्च। अन्यथा घटोऽस्ति घटो नास्तीत्यादिव्याहतेरपि दशाद्वयावलंबनेन व्यवस्थासंभवाद्व्याहतिमात्रोच्छेदप्रसङ्गः। (त. पु. ७ प. २६) * अंत्ये न सच्छब्दं स्यात् * इति वदतैकदशावलंबनस्यैवाश्रितत्वाच्च॥ (३) द्वैतजालपराकरणदशायां तव मते शरीराभावेन वपुःपदवैयर्थ्यं च। घटस्य वपुरिति प्रयोगादर्शनेन वपुःपदस्य स्वरूपमात्रपरत्वायोगात्। निर्निमित्तं लक्षणाश्रयणस्यान्याय्यत्वात्॥ (४) उत्तरपदस्यैवाल्पाच्तरत्वेन पूर्वपदादेव द्वितीयमात्रलाभादुत्तरपदवैयर्थ्येन च ×द्वंद्वमाश्रित्योभयनिषेधोऽपि

---

×"पराकृतद्वैतजालवपुषे" इत्यस्य बहुव्रीहिमाश्रित्य कृततत्त्वदीपनव्याख्याद्वयेऽपि दोषमुद्भाव्य द्वैतजालं च वपुश्च द्वैतजालवपुषी इति द्वंद्वपक्षेऽपि उत्तरपद-

स्वपाण्डित्यनिषेध एवेति ॥ (५) "रोऽग्निर्मध्यलघुर्मृति"मितिवचनादादावेवाति-निकृष्ट-मृत्याख्य-फलदायकरगणकरणं चातिनिकृष्टमिति (६) षड्व्रणानि द्रष्टव्यानि ॥ १ ॥ (वि. पु. ८ प. ४) * विघ्नाभितापमपहत्य मदीयकृत्यबीजं प्रवृद्धमदनुग्रहवर्षपातैः । संप्रार्थितः सिततरोऽपि गणेशमेघः सिंचन्नभीष्टफलमंकुरयत्वमोघम् * इति गणेशप्रार्थनारूपे तृतीयपद्ये * विघ्नाभितापमपहत्य * इत्यस्य (त. पु. ८ प. ३५) * आध्यात्मिकादितापनिरासेन * इति व्याख्याततया नानाविधसकलविघ्नपरिहारस्याप्युक्तेः * अभीष्टफलं * इत्यस्यापि (त. पु. ८ प. ३६) * अनर्थनिवृत्त्यादिफलं * इति व्याख्यातत्वेन ग्रन्थे चानर्थो विघ्न एवेति तत्परिहारस्यैव प्राप्तेः * अमोघं * इत्यस्यापि पुनः (त. पु. १३ प. १८) * अविघ्नपरिसमाप्त्यादि प्रयोजनम् * इति व्याख्यातत्वेन विघ्नपरिहारस्याप्युक्तत्वात्पौनरुक्त्यम् । "रक्तो रक्ताङ्गरागांशुककिरणयुतस्तुंदिलश्चन्द्रमौलि"रिति विनायकस्य रक्ततया श्रवणात्सिततरत्वानुपपत्तिश्च ॥३॥ (वि. पु.१३ प.२) * श्यामोऽपि श्रुतिकमलावबोधरागः शान्तः सन्नयति तमोविनाशमन्तः । नीरूपं प्रथयति योऽपि गोसहस्रैस्तं व्यासं नमत जगत्यपूर्वभानुं * इति व्यासप्रार्थनारूपे चतुर्थपद्ये च "नमते"ति परकर्तृकनमस्कारकथनं प्रकृतानुपयुक्तमित्याशंक्य यदुक्तं तत्वदीपने (त. पु. १३ प. १९) * "विज्ञानं यज्ञं तनुत"इत्यादिवचनात् करणानि कर्तृणि च प्रतीयंते, तद्योगाच्च त्वं पदार्थस्य कर्तृत्वं, तस्मादंतःकरणनमस्कर्तृत्वनिर्देशेन स्वस्य तन्निर्दिष्टं स्यात् * इति । तच्चिंत्यम् । समाप्तिकरणनमस्कारस्य स्वीयत्वेन तन्निष्ठसमाप्तिकर्तृत्वस्यैव कथंचित्स्वीयत्वसंभवेऽपि "नमने"ति मध्यमपुरुषमहिम्ना नमस्काररूपक्रियां प्रति परमनोवाक्कायरूपकरणनिष्ठं यत्कर्तृत्वं तत्कथं तदसंबन्धिनः स्वस्य स्यात्?

---

स्यैवाल्पाचतरत्वेनेत्यादिना दोषोऽभिहितः । इदानींतनमुद्रिततत्वदीपने द्वंद्वमाश्रित्यव्याख्यानं नोपलभ्यते, अतः कस्येदं दूषणमिति यद्यप्युन्मिषति शङ्का । तथाऽपि स्वव्याख्यायामुक्तदोषभीरुः द्वंद्वमत्राश्रितमित्यपि वदेत्, परस्मिन्ननाश्वासात् । अतः द्वंद्वसमासपक्षोऽप्याशंक्य दूषित इति प्रतिभाति । अथवा पूर्वतनमूलकोशेषु द्वंद्वाश्रयणेनापि व्याख्याऽऽसीत् , सेदानींतनैरस्मदुक्तदोषशंकिभिः परैः परित्यक्तेति वा सहृदयैराकलनीयम् ।

स्यात्कथंचित्तत्करणसंबन्धिषु परेष्वेव त्वदुक्तरीत्याऽपि । स्वमनआदीनि करणानि संबोध्य "नमते"त्युक्तिश्चेत्तर्हि स्वमनस्कृतनमस्कारध्यानादौ परकीयत्वशंकाया एवानुत्थानाद्व्यर्थमिदं समाधानसमर्थनम् । * नमः सत * इत्यत्राप्यस्य पर्यनुयोगस्य लब्धावसरत्वादत्रैव विशिष्य प्रस्तावनाऽयोगाच्च । स्वमन-आदीन्यामंत्र्येयमुक्तिरित्यवश्यं वक्तव्यांशस्याप्रदर्शनादतत्त्वदीपनं तत्त्वदीपनं स्यात् । तथाच आपातचमत्कारोऽयं न युक्तिचमत्कार इति । यच्चोक्तं (त. पु. १३ प. २३) * विधांतरेणापूर्वत्वमाह "श्रुतिकमलावबोधराग" इति * इति । तदपि न प्रतिज्ञा-तार्थसिद्धिमत् । कमलावबोधरागोऽसौ श्रुतिकमलावबोधरागोऽयमिति साम्यमात्र-स्यैव प्रतीत्याऽपूर्वताविधांतरत्वासंभवात् । ×अरुणोऽसौ कमलावबोधहेतुरयं तु श्याम-एवेत्यपूर्वतायाः प्रदर्शितत्वान्नैवमितिचेन्न । तस्याः श्यामपदव्याख्यावसर एव (त. पु. १३ प. २२) * प्रसिद्धस्त्वरुणोऽयं तु कृष्ण * इति प्रदर्शितत्वेन पुन-र्विधांतरत्वासंभवात् । यद्यपि श्यामः श्रुतिकमलावबोधरागोऽपीति श्लेषोज्जीविताऽपूर्वताऽत्रापि कथंचिद्वक्तुं शक्या । तथापि टीकाकृता श्यामत्वारुणत्वाभ्या-मेवात्राप्यपूर्वतायाः समर्थितत्वात् कथं न विधांतरत्वासंभवः । तस्मादुग्रोऽसौ शांतोऽयं, बाह्यं तमोऽसौ धुनोति अयमांतरं, सरूपमसौ प्रथयति नीरूपमय-मिति संभवद्विधात्रयं "वैधर्म्यांतरमाहे"ति सकृदेवोक्त्वा पृथक्पृथगप्रदर्श्या-संभावितोक्त पार्थक्यकथनं न कथंचिदपि सार्थक्यं लभत ‡इति व्रणानि ।

---

×(त. पु. १३ प. २४) * भानुस्तु रक्तः सन् कमलविकसनहेतुः अयंतु श्यामोऽपि श्रुतिशक्तितात्पर्यावधारणहेतु * रित्यस्यार्थानुवादोऽयम् ॥

‡अयमाशयः । कमलावबोधरागः श्रुतिकमलावबोधराग इति साम्यस्यैव प्रतीत्या अपूर्वतायां विधांतरत्वासंभवात् । यतः पूर्वं श्यामपदव्याख्यावसरे अरुणः श्याम इति पदाभ्यां वैधर्म्यरूपमेवापूर्वत्वं प्रदर्शितम् । अतो नेदं वैधर्म्यस्य वि-धांतरम् । किंच ग्रन्थकृदुक्तरीत्या त्रिधा साहजिकवैधर्म्ये सति तथा स्पष्टमप्रदर्श्य प्रथमतः विधांतरमाहेति पश्चाद्द्विवारं वैधर्म्यांतरमाहेति शब्दांतरेण द्विधोक्तिः कुतः? वैधर्म्यांतरमाहेति सकृदेवोक्त्वा श्यामपदव्याख्यावसरोक्तमेकं वैधर्म्यं इदानीं उच्य-मानं वैधर्म्यद्वयं इति स्पष्टं वैधर्म्ये तिस्रो विधाः प्रदर्शनीयाः । परस्यापि विधांतरं

(वि. पु. १३ प. ४) * "उद्धृत्य वेदपयसः कमलामिवाब्धेरालिङ्गिताखिलजगत्प्रभवैकमूर्तिम् । विद्यामशेषजगतां सुखदामदाद्यः" *इति पञ्चमपद्यव्याख्यानावसरे यदुक्तं तत्वदीपने (त. पु. १४ प. १६) * "कमला खलु नारायणगात्रमेवालिंग्य व्यवस्थिता तां सर्वस्मै प्रादात् * इति तदपि युक्त्यादिविरुद्धम् । कमलारूपसीताप्रतिकृतिमात्रापहारिणो रावणस्य रुक्मिण्यपेक्षामात्रकारिणः शिशुपालस्य च वधेन युक्तिविरुद्धम् । "हित्वेतरान्प्रार्थयतो विभूतिर्यस्यांघ्रिरेणुं जुषतेऽनभीप्सो"रित्यादिस्मृतिविरुद्धं च । नच साक्षाच्छ्रियो दानमेव विरुद्धं न तु कुप्यादिरूपेण तस्या दानमिति वाच्यम्। (त. पु. १४ प. १७) * "कनकांशुकक्षेत्रादिसंपादनेन कमला यथा सुखदा * इति तदभिमन्यमानानां तेषां तद्देयतया "अशेषसुखदा"मिति पदव्याख्यावसरे पृथगेवोक्तत्वेनात्र तद्वाच्याः साक्षाच्छ्रियो दानस्यापरिहार्यत्वादिति व्रणम् । एवं च सकलमपि +मङ्गलपद्यं सावद्यम् । यच्चोक्तं तत्वदीपने (त. पु. १५ प. २१) * "शिष्टैर्धर्मबुध्यानुष्ठीयमानाऽऽचारस्य तत्कल्पकत्वात् । नापि शिष्टासिद्धिः । वैदिकार्थानुष्ठातॄणां शिष्टत्वात् * इति । तदपि न युक्तम् । एवं हि सति मङ्गलं वेदमूलकं वैदिकार्थानुष्ठातृभिर्धर्मबुद्धयाऽनुष्ठीयमानत्वात् इत्युक्तं स्यात् । तस्य च तादृशशिष्टैर्धर्मभ्रांत्याऽनुष्ठीयमाने निष्ठीवनादौ व्यभिचारात् । नच बुद्धिः प्रमितिरिति वाच्यम । मूलीभूतवेदसिद्धेः प्राक्प्रमात्वासिद्धया हेतोः संदिग्धासिद्धिप्रसङ्गात् । शेषवैयर्थ्याच्च । नच निष्ठीवनादेरवैदिकत्वान्न तदा वैदिकार्थानुष्ठातारस्त इति वाच्यम् । एवं सति मङ्गलस्य वेदमूलकत्वसिद्धौ वैदिकत्वसिद्धया तदा वैदिकार्थानुष्ठातृत्व-

---

वैधर्म्यमेवेति सम्मतम् । अन्यथा अन्तरपदवैयर्थ्यात् । वैधर्म्यमाहेत्यनुक्त्वा वैधर्म्यांतरमाहेति च न वदेत । तथा च अपूर्वत्वे विधांतरमाहेति पूर्वं पश्चाद्विवारं वैधर्म्यांतरमाहेति एकस्याप्यर्थस्य व्यामोहकशब्दभेदेन कथनमज्ञानविजृंभितमेवेति त्रिषु वैधर्म्येषु अपूर्वत्वे विधांतरमाहेति वैधर्म्यांतरमाहेति च पार्थक्येन कथनं न सार्थक्यं लभत इति ॥

+अवशिष्टमङ्गलपद्ये दूषणमपि उक्तन्यायेन स्वयमूहितुं शक्यमिति सकलमपीत्युक्तमिति विभावनीयम् ॥

सिद्धिः । तत्सिद्धौ च हेतुसिद्धया मङ्गलस्य वेदमूलकत्वसिद्धिरित्यन्योन्याश्रयात् ॥ मानांतरेण वैदिकत्वसिद्धौ किमनेन सिद्धसाधनेन । या च तत्वदीपने (वि. पु. १५ प. ३) * "शास्त्रार्थश्च तत्त्वंपदार्थविवेकोपायलभ्यः प्रत्यग्ब्रह्मणोरेकत्वलक्षणः संक्षेपतो दर्शनीय * इति विवरणस्य (त पु. १५ प. ३०) * "तथापि ग्रन्थ एव नमस्कारः कस्मादितिशंकां निरस्यती * ति सङ्गतिरुक्ता । साऽपि न युक्ता । (पं १६ प. २) * "अनाद्यानन्दकूटस्थज्ञानानन्तसदात्मने । अभूतद्वैतजालाय साक्षिणे ब्रह्मणे नम * इति पञ्चपादिकामङ्गलपद्ये "अनादी"त्यादिस्तुतिरूप-पूजायाः ग्रन्थे निवेशनस्य कथंचित्तदर्थत्वसंभवेऽपि "नम" इति प्रह्वीभावमात्रार्थक-भेदसापेक्षनमस्कारस्य ग्रन्थे निवेशनस्य शिष्यशिक्षणमात्रफलस्य तादर्थ्यासंभवात् । (त. पु. १८ प. २५) * "तथापि ग्रन्थे क्रियमाणा श्रोतॄणामन्यमनस्कानामपि फलदा स्यादिति मत्वा ग्रन्थे करणं * इति त्वयैव फलान्तरस्य वक्ष्यमाणत्वाच्च । नच नमस्कारपदेन स्तुतिरेवाभिप्रेनेति वाच्यम् । अशब्दार्थत्वात् । लक्षणायाश्च प्रयोजनाभावात् । (वि. १५ प. २) * "अभिलषितदेवतापूजानमस्कारः कर्तव्य * इति विवरण एव पूजायाः पृथगुक्तेश्च । "ग्रन्थ एव नमस्कारः कस्मादि" त्यतोऽपि ग्रन्थ एव पूजा कस्मादित्यस्य लघुत्वाच्च । यच्च पञ्चपादिकायां (पं. पु. १६ प. २) * "अनाद्यानन्दकूटस्थज्ञानानन्तसदात्मन" * इत्यत्र (त. पु. १७ प. २३) * संसार्यसंसार्यादिभावेन जीवपरयोर्भेदं केचिदाचक्षते । तान्प्रत्याह "आत्मन इती * त्यादिना तत्वदीपने व्याख्यातत्वात् । "आत्मन इत्यादिविशेषणैः प्रत्यगात्माभिन्नं शुद्धं व्यपदिश्य य"न्नम" इति भेदसापेक्षनमस्करणं तच्च पूर्वोत्तर-विरुद्धम् । नच वाच्य"मभूतद्वैतजालाये"ति अपारमार्थिकभेदोररीकरणान्नमस्कर्तृ-नमस्कार्यभावोपपत्तिरिति । एवंसत्यतात्त्विकभेदप्रपञ्चशबलितत्वेन शुद्धत्वहानेः । शुद्धमात्रार्थकप्राथमिकविशेषणानामसङ्गतत्वप्रसङ्गात् । तथा चेयमुभयतः पाशारज्जुः । "अनादी"त्यादिविशेषणं वा त्याज्यम् । "नम"इति क्रिया वा हेयेति । द्वैतजाल-रहितायेत्यर्थाङ्गीकारे तु "आत्मन" इति पदेन पौनरुक्त्यं सुतरां नमस्कारायोगश्च । यच्च (पं. पु. १८ प. २) * "नमः श्रुतिशिरःपद्मषण्डमार्तण्डमूर्तय" * इत्यस्य (त. पु. १८ प. २८) * "श्रवणे पौष्कल्यमाह । श्रुतीती" * तियत्तत्वदी-

पनं तदपि न। अनेन विशेषणेन व्यासस्य पद्मस्थानीयवेदान्तवाक्यविकसनहेतुत्व-स्यैव प्राप्त्याऽर्थप्रकाशापरपर्याय-व्याकर्तृत्वशक्तिपौष्कल्यसिद्धावपि गुरुमुखविवेचि-तार्थवेदान्तवाक्यबोधितहृदयत्वरूपश्रवणपुष्कलताया अलाभात्। तथासति "श्रुति-शिरःसूर्यपद्मस्थानीयबुद्धय" इति स्यात्। यच्चोक्तं (पं पु. १८ प. ३) * "नमाम्यभोगिपरिवारसंपदं............विनाविनायकमपूर्वशङ्करम्" * इत्यत्र (त. पु. १८. प. ३२) * "भोगिनामधेयसर्पपरिवारसंपन्नः प्रसिद्धः शङ्करः" * इति। तदपि न। प्रमथपरिवारस्य तस्य सर्पभूषणत्वेऽपि तत्परिवारत्वाप्रसिद्धेः। नच वाच्यं परितो वृणोत्यङ्गमिति परिवारो भूषणमिति। टीकाकृताऽनुक्तत्वात्। लोके-तथाऽव्यवहारेण निघण्ट्वादावननुशासनेन च रूढिमुपेक्ष्य केवलयोगेनान्यत्रशब्द-वृत्तेरयोगात्। (त. पु. १८ प. ३३) * "अयंतु निरस्तसमस्तैषणमुनिवरनिकर-परिवृत" * इत्यर्थांतरस्यैवोक्तेश्च। यच्च (पं. पु. १८ प. ४) * "विनाविना-यक" * मिति विशेषणं तदपि वैदिकंमन्यस्य कृतदशाकारहरिपूजनस्य पराचार्य-स्यासङ्गतम्। षडभिज्ञो दशबलोऽद्वयवादी विनायक"इति विनायकपदेन बुद्धस्यैव प्राप्तेः। नच (त. पु. १० प. १७) * "निरस्तसमस्तबौद्धसमय इत्यर्थ" * इत्युक्तमिति वाच्यम्। तथासति "विनावैनायकमिति" प्रयोगप्रसङ्गात्। लक्षणायाश्च प्रयोजनाभावात्। स्वरसालभ्यश्लेषस्यैवास्वरसपात्रत्वात्। यच्चोक्तं तत्त्वदीपने (त. पु. २० प. १३)* "फलवद्ग्रन्थकरणसन्निधानान्नमस्कारस्य तच्छेषत्वद्योतनार्थं प्रतिज्ञात" * मिति। तदपि न। चिकीर्षितस्य ग्रन्थस्य करणेसति नमस्कारस्य सन्निहिततच्छे-षताया विनापि प्रतिज्ञां बोद्धुंशक्यत्वात्। प्रतिज्ञानेऽपिहि सन्निधानादेव नमस्कारस्य तच्छेषत्वं लभ्यते। तच्चाव्यवधानेन क्रियमाणग्रन्थेऽपि समम्। बहुव्याख्येयसंभ-वार्तिक व्याख्यास्यतीति श्रोतृजनमनोव्याकुलतामात्रपरिहारस्य तत्प्रयोजनत्वाच्च। यच्चोक्तं विवरणे (वि. पु. २२ प. २) * साधनचतुष्टयसंपन्नस्य ब्रह्मज्ञानाय विचारः कर्तव्य इति सूत्रवाक्यस्य श्रौतोऽर्थः संपद्यते। अर्थादधिकारिविशेषणमोक्षसाधनं ब्रह्मज्ञानमिति सिध्यति। सन्निधानाच्च वेदान्तवाक्यविचार" * इति। तत्राथ-शब्दश्रौतार्थे आनन्तर्ये साधनचतुष्टयसंपत्तेरपि योग्यतया संबन्धेनापदार्थतया तद्वतोऽ धिकारिणोऽथशब्दश्रौतार्थत्वं तावद्दूरापास्तम्। अथशब्दोक्ताधिकारिविशेषणमोक्षस्य

चातोमोक्षायेति सार्वविभक्तिकतसिलन्तपूर्वपरामर्शतः-शब्दश्रौतार्थत्वसंभवेन 'मोक्ष-साधनं ब्रह्मज्ञान'मित्यस्यार्थिकार्थत्वकथनं चावोधविजृंभितम् । ब्रह्मज्ञानायेति च किमतःशब्दश्रौतार्थ उत ब्रह्मजिज्ञासापदस्य । न तावदाद्यः । विशिष्य तत्त्वाननु-शासनात् । नापि पूर्वोत्तरपदप्रस्तुतं ब्रह्मज्ञानं, येन परामष्टुं वा शक्येत । नच चित्तस्थब्रह्मज्ञानपरामर्श इति वाच्यम् । समानपदप्राप्तमोक्षपरामर्शं विहाय कथमयं मानान्तरप्राप्तपरामर्शोऽङ्गीक्रियते । अकुशलत्वप्रसङ्गात् । कथंचित्तेनैव तदभिधाने सूत्रश्रुतब्रह्मपदार्थाप्रसङ्गाख्यदोषप्रसङ्गात् । नद्वितीयः । ब्रह्ममात्रार्थकपूर्वपदे विचार-मात्रार्थकोत्तरपदे वा ब्रह्मज्ञानायेत्यस्याश्रूयमाणत्वात् । नचाजहत्स्वार्थलक्षणया जि-ज्ञासापदेनैव ज्ञानेच्छाऽपि लक्ष्यत इति वाच्यम् । तथासति ज्ञानेच्छाविचारयोः समप्रधानभावेनैव प्राप्तत्वेनेच्छाया अविधेयत्वेन चाध्याहृतवेदान्तानामेव जिज्ञासा-पदसंबन्धेन ब्रह्मणो जिज्ञासेति समासस्यैवाभावाच्च । अध्याहृतक्रियया सहासङ्गति-प्रसङ्गात् । लुप्तविभक्तिके समस्तपदे बोधकपदाभावेन योग्यतया ज्ञानायेति लाभेऽप्यश्रौतत्वापरिहारात् । त्वया संबध्यमानवेदान्तज्ञानलाभेऽपि ब्रह्मज्ञानालाभाच्च । योग्यतयाऽऽनीतवेदान्तानामेव जिज्ञासापदसंबन्धेन ब्रह्मपदवैयर्थ्याच्च । नापि लक्षणामूलशक्यसंबन्धरूपतया ज्ञानसाधनत्वस्य प्राप्तिः । एवं सत्यार्थिकार्थत्व-प्रसङ्गेन त्वदभिलपितश्रौतार्थत्वस्य दत्तजलाञ्जलित्वापातात् । सूत्रवाक्यावयवाऽतः-शब्दार्थस्यानिरूपणप्रसङ्गाच्च । अतो मोक्षाय, अतस्तत्साधनब्रह्मज्ञानायेत्यावृत्त्योभयोरप्यत शब्दार्थत्वसंभवेन एतादृशकुसृष्टेरनाश्रयणीयत्वाच्च । एतेन मध्यमपदलोपी समास इति मन्दाशङ्कापि प्रत्युक्ता । कर्मधारयभेदस्य तस्य "शाकपार्थिवो" "मुखनासिका-वचनोऽनुनासिक" इत्यादाविव सामानाधिकरण्यनियमेन ज्ञानायेति भिन्नवि-भक्तिकमध्यमपदालाभाच्च । यच्च ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासेति षष्ठ्या विषयतया श्रुतब्रह्मपरित्यागेनाश्रुतवेदान्तानां सन्निधानाद्विषयतया संबन्धकथनं तदपि श्रुत-हान्यश्रुतप्रहाख्यदोषापादकत्वादनुपपन्नम् । "आनन्दमयोऽभ्यासात्" "आकाशस्त-ल्लिङ्गादि"त्यादौ करिष्यमाणविचारविषयतया ब्रह्मण एव निदर्शयिष्यमाणत्वेनोत्तर-विरोधाच्च । विचारविषयब्रह्मप्रतिपादकमेव वाक्यं विषयवाक्यम् । नतु साक्षाद्वि-चारस्य स्वयमेव विषयः । नहीदमनिदं वा 'एव मनेवं वा' इति वाक्यसंदेहः । किंतु

'ब्रह्मैव तद्वाक्यार्थोऽन्यद्वे'ति तदर्थभूतब्रह्मण्येव संशयः। तथाच संशयसमानविषय-विचारः कथमन्यविषयः स्यात् । "शा. भा. ७५८—१" "तस्माद्यथोक्तसाधनसंपत्त्यनन्तरं ब्रह्मजिज्ञासा कर्तव्या। ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासे"तिवक्ष्यमाणभाष्य-विरोधाच्च । "तद्विजिज्ञासस्व तद्ब्रह्मे"ति। "तस्माद्भारत सर्वात्मा भगवान्हरिरीश्वरः। श्रोतव्यः कीर्तितव्यश्च मन्तव्यश्चेच्छताऽभयम्"इत्यादिनिरवकाशश्रुतिस्मृतिषु साक्षाच्छ्रवणादिरूपविचारविषयतया प्रमितब्रह्मपरित्यागेन प्रामाणिकपरित्यागरूपत्वाच्च । अत एव ब्रह्मशब्दोऽयं विष्णुपरो न निर्गुणब्रह्मादिपर इत्यपि सिद्धम् । ज्ञानोद्देशेन विधीयमानजिज्ञासाविशेषणत्वेन ब्रह्मणोऽप्राधान्यं स्यादिति चेन्न। उद्देश्यदर्शनकोटावप्यनुप्रवेशसंभवेन तस्य परिहर्तुं शक्यत्वात्। ब्रह्मज्ञानं ह्युद्देश्यं साक्षादुद्देश्यदर्शनोपसर्जनत्वनिमित्तब्रह्माप्राधान्यस्य "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादौ स्वप्रधानतया प्रतिपादनेनैव त्वयापि परिहर्तव्यत्वाच्च । "श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभि"रित्यादौ वेदान्तानां श्रवणरूपविचारकरणतयैव प्रतिपादितत्वेन तद्विरुद्धविषयत्वोक्तेरप्रामाणिककल्पनारूपत्वाच्च । एवं च परोत्थापिता श्रवणादिविधाने वाक्यभेदशङ्कापि निर्मूला । आत्मा द्रष्टव्यो वेदान्ताः श्रोतव्या इत्युक्ते हि सा स्यात् । नचैवम् । उक्तविधया श्रवणादिविधावप्यात्मन एव 'पशुं प्रोक्षयीत' 'पशुं बध्नीत' 'पशुमालभेते'त्यत्र पशोरिव विषयतयाऽन्वयोररीकरणात् । त्वदध्याहृतवेदान्तस्यैव श्रवणादिविधित्रयेणान्वयवत्सन्निकृष्टवाक्ये श्रुतस्यात्मन एव दर्शनादिचतुष्टयेऽप्यन्वयसंभवाच्च । 'आत्मा द्रष्टव्य'इत्युक्ते केन साधनेन द्रष्टव्य इत्याकांक्षाया'मात्मा श्रोतव्य'इत्यादेरेवान्वयार्हत्वात। नह्यन्यश्रवणेनान्यदर्शनम् । व्यधिकरणत्वात्। एवंच संभवत्परिहारं वाक्यभेदमङ्गीकृत्य विधान्तरेण समाधानमप्यात्मनाऽकौशलसमाधानमेवेति । यच्चोक्तं तत्वदीपने काम्यत्वेन मोक्षस्य फलत्वमाशङ्क्य (त. पु. २३ प. १९) * परस्त्रीकामः प्रायश्चित्तं कुर्यादित्यत्र काम्यमानयोषित्पिण्डस्यापि फलत्वापातादि * ति। तच्चिन्त्यम। तथाहि किं कामुकप्रवृत्तिफलता योषित्पिण्डस्याऽऽपाद्यते। उत प्रायश्चित्तरूपक्रियाफलता। नाद्यः। ×भुक्तभोगस्य विरागिणः

---

×तस्मिन् सत्यप्यभवतः तेन विनाऽपि भवतः तत्प्रत्यप्रयोजकत्वादिति न्यायमनुसृत्य दूषयतीति ज्ञेयम् ॥

क्लीबस्य च सत्यपि योषित्पिण्डे कामादर्शनात् । अभुक्तभोगस्य विलासिनः समनस्केन्द्रियस्य तदभावेऽपि कामदर्शनादन्वयव्यतिरेकाभ्यां यागसाध्यस्वर्गस्येव स्त्रीसंभोगादिसाध्यसुखविशेषस्यैव कामनाविषयत्वेन फलत्वौचित्यात् । उद्देश्यस्वर्गसाधनयागस्येव स्त्रीपिण्डस्योद्देश्यसुखविशेषसाधनतया कामुकप्रवृत्तिविषयस्य फलतया शंकितुमप्ययोग्यत्वात् । उद्देश्यत्वं काम्यत्वमित्यनर्थान्तरम् । इष्टसाधनं हीह स्त्रीपिण्डादिकं गुडादिवत् । न पुनरिष्टमेव । इष्टं काम्यमितिच पर्यायः । श्रुतेश्चाबाधितार्थत्वनियमात् "स्त्रियं वा योऽधिगच्छति" "नस्त्रियमुपेयादि"त्यादिश्रुत्यन्तरसमाख्यया च शाकपार्थिवादिवद्वा लक्षणया वा परस्त्रीसंभोगसुखकाम इत्येवार्थस्य वक्तव्यत्वाच्च । नद्वितीयः । परस्त्रीसंभोगकामनाजनितदोषलेपेन निर्विण्णस्य तत्परिहारेच्छोः प्रायश्चित्ते प्रवृत्तस्य प्रवृत्त्युत्तरकालीनतत्क्रियायां स्त्रीपिण्डे तत्संभोगे वा काम्यत्वस्यैवाभावात् । तस्मादविचारितरमणीयैवेयं स्त्रीपिण्डस्य काम्यत्वेन फलत्वशङ्का । यच्च (त. पु. २३ प. २०) * "न विशेषणत्वमात्रेण काम्यत्वमात्रेण वा मुक्तेः फलत्वम् । किंतु काम्यत्वे सत्यनिन्दितत्वेन * इत्युत्तरम् । तच्च न सङ्गच्छते । अगम्यागमनादेरेव "नस्त्रियमुपेयादि"त्यादि श्रुतिस्मृतिविनिन्दितत्वेन "पञ्च कन्याः स्मरेन्नित्यं महापातकनाशनमि"त्यादिना स्तुतस्य अभिवादनादिभक्तियोग्यस्य पतिव्रतापिण्डस्य विनिंदनाभावेन "दत्तेऽप्यौषधे न रोगशांतिरि"तिन्यायेन काम्यत्वस्यानिंदितत्वेन विशेषणेऽप्युक्तदोषतादवस्थ्यात् । कामुकप्रवृत्त्यादिफले विनिन्दितेऽगम्यागमने, 'श्येनेनाभिचरन्यजेते'त्यादिनोक्तश्येनयागादिफले "नहिंस्यात्सर्वाभूतानी"तिश्रुतिनिन्दिते "आराध्य कस्त्वामपवर्गदं हरे वृणीत आर्यो वरमात्मबन्धन"मितिस्मृत्या "को वृणीत"इत्याक्षेपेणा"त्मबन्धनमि"ति बन्धनत्वोक्त्या च विनिन्दिते मोक्षेतरसकलफले चाव्यापनात् । अनिंदितत्वे सति काम्यस्याश्वमेध फलस्य ज्योतिष्टोमफलत्वप्रसङ्गाच्च । ज्योतिष्टोमक्रियया नतत्काम्यमिति चेत्तर्हि यया क्रियया यत्काम्यं तत्तस्याः फलमित्युक्तं स्यात् । एवं चैतावतैव सर्वनिर्वाहादिकमव्याप्तिमापादयताऽतिव्याप्तिमपरिहरताऽनिंदितत्वविशेषणेन । तस्मादज्ञातवस्तुतत्वस्यैवेयं सिद्धान्तसंचारचातुरीति । यच्च (वि. पु. २८ प. २) * कःपुनरस्य सूत्रस्य प्रसङ्गः * इत्यत्र (त. पु. २८ प. १५) * "श्रोतव्य इत्यादिवाक्यं प्रसञ्जकमिति

वक्तव्यम् । नच तत्संभवति । विकल्पासहत्वात् । तत्किं नित्यं नैमित्तिकं वा प्रायश्चित्तरूपं वाऽथवा काम्यम् । नाद्यः । अकरणे प्रत्यवायाश्रुतेः । नद्वितीयः । गृहदाहादिष्विव निमित्ताश्रवणात्" * इति तत्वदीपनं । तच्चिन्त्यम् । "स्वाध्याय-प्रवचनाभ्यां नप्रमदितव्य"मित्यादि श्रुतौ, "श्रवणादि विना नैव क्षणं तिष्ठेदपि कचित्" "बिले वतोरुक्रमविक्रमान्ये न शृण्वतः कर्णपुटे नरस्य" "न यत्र श्रवणादीनि रक्षोघ्नानि स्वकर्मसु । कुर्वंति सात्वतां पत्युर्यातुधान्यश्च तत्रहि" "नयत्र वैकुण्ठ-कथामृतापगे"त्यादिस्मृतौ च श्रवणाकरणे प्रत्यवायश्रवणात् । यच्चैवं वदतोऽभिप्रेतम-करणे प्रत्यवायो यस्य तन्नित्यम् । दोषफलान्यनिमित्ते सति यत्क्रियते तन्नैमित्तिक-मिति । तदपि चिन्त्यम् । नैमित्तिकस्याप्युपरागस्नानादेरकरणे प्रत्यवायश्रवणात् । नित्यस्याप्यग्निहोत्रादेरु"दिते जुहोती"त्यादौ सूर्योदयादिनिमित्तश्रवणाच्च । यद्विचो-भयोः सनिमित्तकत्वाविशेषेऽपि यस्य निमित्तं सूर्योदयादिकमपि नियतमेव नका-दाचित्कम् । नहि सूर्योदयः कदाचिदस्ति कदाचिन्नास्तीत्यस्ति । तन्नित्यम् । यस्य च निमित्तमुपरागगृहदाहादि कादाचित्कमेव न नियतम् । नहि सूर्योपरागादिः प्रतिमासं प्रतिपक्षं वा भवत्येवेत्यस्ति । तन्नैमित्तिकमिति मतं तदा सिद्धं नः समी-हितम् । ग्रन्थलिखितस्य त्वयैव त्याजितत्वात् । नियतस्य ब्राह्मणत्वादेः ब्राह्मणत्वे सति मुक्तियोग्यत्वस्य वा निमित्तस्य श्रवणादावपि संभवेनोक्तरीत्याऽकरणे प्रत्यवाय-श्रवणेन च नित्यत्वसंभवादसङ्गतः काम्यविधित्वोररीकरणरूपोत्तरग्रन्थश्च स्यात् । निष्कामप्रवृत्तिविषयमोक्षकामनया हि काम्यत्वं वक्ष्यते । तच्च "ब्रह्मैव तेन गंत-व्यम्" "तत्कर्म हरितोषं यत्" "कायेन वाचा मनसेन्द्रियैर्वे"त्यादिना सर्वकर्मानु-स्यूतमिति संध्यावन्दनादेरपि काम्यत्वप्रसङ्गाच्च । यच्च (त. पु. ३० प. ८) * "प्रमाणवस्तुपरतन्त्रत्वान्नात्मसाक्षात्कारे विधिसंभव" * इति । तदपि (त. पु. ३० प. १२) * "अद्वितीये ब्रह्मणि वेदान्तानां शक्तितात्पर्यावधारणं श्रवणमि" * ति त्वयैव निरुच्यमानज्ञानरूपश्रवणविधिना समानयोगक्षेमम् । तथाहि प्रमाणं वस्तु च विषयो ज्ञानसामग्री । तथाच ब्रह्मदर्शनसामग्र्यां ब्रह्मदर्शनं भवत्येव तत्र किं विधिनेत्युक्तं स्यात् । इदं च कथं न श्रवणरूपज्ञानेऽपि साधारणम् । सामग्र्याः कार्याजकत्वनियमात् । किंच दर्शनसामग्र्यां दर्शनं भवत्येवेति नतत्र विधिश्च-

द्विध्यर्थत्वेनाभिमतेऽपि कार्ये कथं विधिः। तस्यापि स्वसामग्र्यामुत्पादनियमात्। यदि च मन्यसे सैव सामग्री न स्वरससिद्धा। किंतु बहुवित्तव्ययाऽऽयासपुरुषप्रयत्नसाध्या। अतस्तत्रालसं पुरुषं प्रवर्तयितुं तदिष्टसाधनतावबोधकविधेः सार्थक्यमिति। तर्हीहाप्यनायासेन स्वरससिद्धसामग्रीकघटकुड्यादिदर्शने त्वदुक्तन्यायेन नविधिरित्यस्तु। विषयवैराग्यगुरूपसत्त्यादिबहुप्रयत्नसाध्यसामग्रीके स्वरसाऽप्राप्ते प्रयत्नसाध्ये ब्रह्मश्रवणदर्शनादौ निधिदर्शनादाविवाऽज्ञानिनमलसं च पुरुषं प्रवर्तयितुर्ब्रह्मदर्शनादेरिष्टसाधनतां बोधयतो विधेः कथं नसार्थक्यम्। "अप्राप्ते शास्त्रमर्थव"दितिवचनात्। कुतस्तर्हि जिज्ञासापदस्य भवदागमेऽपि विचारपरतेति चेत्। साक्षात्तदर्थभूतसन्प्रत्ययाभिधेयेच्छाया अविधेयत्वादेवेति ब्रूमः। तथाहि। निषिद्धेऽपि स्वरससुन्दरे परदारादौ विपरीतं प्रयतमानस्यापि शिष्टस्येच्छादर्शनाद्विहितेऽपि स्नानाशनादावनुकूलं प्रयतमानस्यापि तददर्शनात्पुरुषप्रयत्नागोचरस्तावदिच्छा। तत्र च केवलमिष्टसाधनतावबोधनमुखेन पुरुषप्रवर्तनैकफलो विधिः कथं तत्प्रयत्नागोचरेच्छायां सार्थकः स्यात्। किंतु चन्द्रमण्डलमाहरेत्यादिवदसाध्यगोचरनियोगतया व्यर्थ एवातः "कर्तव्ये"त्यध्याहृतक्रियासंबन्धघटनाय नियोगयोग्यपुरुषप्रयत्नसाध्यश्रवणादिरूपविचारस्यैवावश्यंवक्तव्यत्वात्। सूत्रस्य च "श्रोतव्य"इत्यादिश्रुत्यनुसारित्वाच्छ्रवणादेरेव ज्ञानंप्रति मुख्यसाधनत्वाच्च। यच्च (त. पु. ३० प. ९) * "आत्मनि विज्ञात इति"सर्वस्याऽऽत्मोपादानत्वाद्व्यतिरेकेणाभावस्तत आत्मज्ञानात्सर्वज्ञानं युक्तम्" * इति तत्वदीपनं तदपि न युक्तम्। अधिष्ठानभूतशुक्त्यज्ञानदशोत्पन्नरजतादिभ्रमाणां शुक्तिज्ञाने सति निवृत्तेरेव दर्शनेन जगदारोपाधिष्ठानात्मविज्ञाने सर्वभ्रमनिवृत्तेरेव वक्तव्यत्वात्। (वि.पु.२१०प.२)* "भूयश्चान्ते विश्वमायानिवृत्ति"। * रिति वदता त्वयैवाङ्गीकृतत्वाच्च। नचाधिष्ठानसामान्यज्ञानं भ्रमानुकूलमिति वाच्यम्। (वि.पु.२९प.२)* "आत्मनि विज्ञाते सर्वमिदं विज्ञातम्"। "एतावदरे खल्वमृतत्व" मित्युपसंहारादमृतत्वसाधनमात्मदर्शनं द्रष्टव्य इत्यनूद्य * तिविवरणोक्तेरमृतत्वसाधनचरमाऽऽत्मदर्शनस्यैवात्र वक्तव्यत्वात्। तस्यच विश्वभ्रमनिवर्तकत्वावश्यंभावात्। "विज्ञात"इत्यत्र वीत्युपसर्गस्य वैयर्थ्याच्च। ब्रह्मचिन्मात्रविषयकनिर्विकल्पकरूपे चरमदर्शने जगदुल्लेखस्यैवासंभवादनङ्गीकाराच्च कथमात्मनि विज्ञाते सर्वविज्ञानम्।

एतेन निषेध्यतया आत्मनि विज्ञाते सर्वविज्ञानमिति मन्दाशङ्काऽपि निरस्ता वेदितव्या। निष्प्रकारके त्वदभिमतचरमदर्शने केनापि प्रकारेण कस्याप्युल्लेखासंभवात्। सर्वस्यास्याभावो विज्ञातः स्यादिति प्रयोगप्रसङ्गाच्च। नहि घटाभावज्ञानं घटज्ञानमिति यःकोऽपि व्यवहरति। किंचैतादृशसर्वविज्ञानस्य घट एवायं नपटादिरिति पामरज्ञानेऽपि संभवेनात्मविज्ञाने स्तुतिरूपार्थवादतया रुच्युत्पादकत्वाभावेन विशिष्य प्रस्तावनावैयर्थ्यापाताच्च। (त. पु ३० प. ९) * "सर्वस्यात्मोपादानत्वात् * इतिहेतोरसङ्गतत्वापाताच्च। नहि भूतले घटो नास्तीति भूतलज्ञाने जायमानघटाभावज्ञानसंघटनाय भूतलघटयोरुपादानोपादेयभावोऽप्यपेक्ष्यते। अपिचैवमभावस्य प्रतियोगिज्ञानाधीनज्ञानत्वेन जगतः प्रागेव विज्ञातत्वावश्यंभावा "दविज्ञातं विज्ञातं भवती"तिछान्दोग्यगतैतद्वाक्यसमाख्यारूपवाक्यार्थानुपपत्तिप्रसङ्गाच्च। "यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्या"दितिदृष्टान्ताननुगुणत्वाच्च। नहि मृदादिविज्ञाने मृण्मयादिकं नास्तीति विज्ञायते। जलाहरणादिव्यवहारविलोपप्रसङ्गात्। अपिचैवं सति "नेह नानास्ति किंचलने"तिश्रौतनिषेधस्य सामान्यनिषेधतया तज्जन्यज्ञानस्यापि तादृशत्वनियमेन"किंचन ने"ति जगतो निषेध्यतया सामान्यज्ञानसंभवेऽपि विज्ञानासंभवेनात्राप्युपसर्गवैयर्थ्याच्च। नहि चरमदर्शने निषेध्यतया सर्वस्य विशिष्य दर्शनम्। अपर्यवसानप्रसङ्गात्। किंच ब्रह्मज्ञानात्प्राक्प्रतियोगिभूतापरिमितजगज्ज्ञानं विशिष्य नास्त्येव। असर्वज्ञत्वात्सर्वस्य। अतश्चरमदर्शनेऽपि न विशिष्य सर्वप्रतिषेधः। नहि प्रमेयत्वेन प्रतियोगिनि ज्ञाने घटो नास्तीति विशिष्य निषेधो दृष्टचरः। एवंचाऽऽविपालगोपालं प्रागपि विद्यमानसामान्यज्ञानस्याऽऽत्मज्ञानप्रयोज्यत्वाभावेना"ऽऽत्मनि विज्ञाते"सतीति सतिसप्तम्यर्थहेतुत्वस्यचाऽन्यत्रच "येने"तितृतीयार्थभूतकरणत्वस्यचाऽनुपपत्तिप्रसङ्गात्। अतो यत्किंचिदेतत्। नापि ब्रह्मणो जगदुपादानत्वादुपादानोपादेययोश्चाभेदाद्ब्रह्मविज्ञानं सर्वविज्ञानमिति वाच्यम्। मिथ्याज्ञानस्य सत्योपादानत्वानुपपत्तेर्नायमपि पक्षः साधुरिति। (त. पु. ९३ प. ३१) * "उपादानस्य सत्यत्वे तत्कार्यस्यापि सत्यत्वं स्यात्। तयोरभेदादित्यर्थ" * इति तत्वदीपने वक्ष्यमाणत्वान्न सत्यस्य ब्रह्मणो मिथ्याभूतजगता सह साक्षादभेदोपपादकमुख्योपादानत्वम्। असंभवादनङ्गीकाराच्च। विक्रियमाणजगदुपादाना-

ऽविद्याधिष्ठानत्वमात्रेणोपचरितोपादानस्य च सत्यकूटस्थचिन्मात्रब्रह्मणोऽनृतपरिणामिजडजगदभेदस्यैवासंभवादसंमतेश्च । नहि तत्र मते जीवब्रह्मचितोरिव जडाजडयोर्मुख्यैक्यम् । जहदजहल्लक्षणावैयर्थ्यप्रसङ्गात् । (शा.भा.पु.७६प.१)"अन्योन्यस्मिन्नन्योन्यात्मकतामध्यस्ये"तिभाष्यविरोधाच्च । किंतु (त. पु. ३० प. ९) * "तद्व्यतिरेकेणाभाव" * इति तत्वदीपनाभिप्रेतं मिथ्यात्वमेव । तच्च प्रकृतानुपयोगीति कथमेकविज्ञाने सर्वविज्ञानम् । यच्चोक्तं विवरणे (वि. पु. ३० प. २) * "आत्मदर्शनं द्रष्टव्य इत्यनूद्य तादर्थ्येन मननिदिध्यासनाभ्यां फलोपकार्यङ्गाभ्यां सह श्रवणं नामाऽङ्गि विधीयत" * इति । तत्र प्रष्टव्यम् । श्रवणाव्यवहितोत्तरक्षणे तज्जन्यमपरोक्षदर्शनं भवति नवेति । नतावत्प्रथमः । कालान्तरभाविनि ज्योतिष्टोमफले स्वर्गे नियमेन ज्योतिष्टोमादुत्तरभाविनः फलभूतस्वर्गात्पूर्वभाविनः प्रयाजादेः फलोपकार्यङ्गत्वसंभवेऽपि पूर्वोत्पन्ने श्रवणफलेऽपरोक्षदर्शने तदुत्तरकालीनयोर्मनननिदिध्यासनयोरुपकारित्वस्यैवाभावेन फलोपकार्यङ्गत्वस्य सुतरामभावापातात् । ननु जातमपि तदपरोक्षदर्शनमजातप्रायं सत् स्वकार्याविद्यातिरस्कारेऽसंभावनाविपरीतभावनानिवर्तकमनननिदिध्यासनसाचिव्यमपेक्षते इति चेन्न । तथासति दर्शनजन्यफलनिष्पादकयोस्तयोस्तत्फलेन सफलतया दर्शनेऽङ्गिनि फलोपकार्यङ्गत्वप्रसङ्गात् । द्वितीये कालान्तरभाविदर्शनं प्रति निदिध्यासनमननपूर्वकालीनमिदमेव श्रवणं कारणमुत मनननिदिध्यासनोपोद्बलितं श्रवणान्तरं कारणम् । अथवा निदिध्यासनमेवाव्यवहितपूर्वकालीनं कारणमिति प्रष्टव्यम् । न प्रथमः । ज्ञानरूपतया त्रिक्षणावस्थायित्वेन चिरनष्टस्य तस्य श्रवणस्य बहुव्यवहितकालान्तरभाविफलं प्रति कारणत्वस्यैवायोगात् । संस्कारजन्यत्वे स्मृतित्वापातात् । अव्यवहितपूर्वकालीननिदिध्यासनस्यैव साक्षात्तत्कारणत्वप्रसङ्गाच्च । न द्वितीयः । तादृशश्रवणविशेषं प्रति ततः पूर्वकालीनयोरनयोः पूर्वाङ्गत्वस्यैव प्रसङ्गात् । निदिध्यासनानन्तरं पुनः श्रवणे प्रमाणाभावाच्च । न तृतीयः । एवंसत्यपरोक्षदर्शने साक्षात्साधनीभूतनिदिध्यासनस्वरूपनिष्पादकयोः श्रवणमननयोरेव ज्योतिष्टोमस्वरूपनिष्पादक-प्रोक्षणावघातवदङ्गत्वौचित्यात् । निदिध्यासनस्यैव ज्योतिष्टोमवदंगित्वप्रसङ्गाच्च । नचैवं ज्योतिष्टोमस्यापि प्रयाजादिकं प्रत्यङ्गत्वं स्यादिति वाच्यम् । प्रयाजादिस्वरूपानिष्पादक-

तथा पूर्वाङ्गत्वस्य तदुत्तरकालीनत्वाभावेन फलोपकार्यङ्गतायाश्चासंभवात् । प्रत्युत फलेन सहैकवाक्यनिर्दिष्टतया फलवतो ज्योतिष्टोमस्य प्रकरणे फलोद्देशशून्यविप्रकृष्ट-वाक्ये विहितत्वेनाफलस्य प्रयाजादेरेवाङ्गत्वयोग्यत्वात् । नचवाच्यं "द्रष्टव्यः श्रोत-व्य"इतिसाक्षाद्दर्शनरूपफलैकवाक्यतया सफलत्वाच्छ्रवणमेवाङ्गीति । तथासति श्रवणासाधकत्वेन तदनन्वितयोर्मननिदिध्यासनयोरन्वयस्यैवाभावप्रसङ्गेनाविप्रकृष्ट-पूर्ववाक्यनिर्दिष्टदर्शनरूपफलोद्देशेनैव तयोरपि विधानावश्यंभावात् । सूत्रकृता चोद्देश्यदर्शनरूपफलान्विततया जिज्ञासापदार्थभूतश्रवणादिरूपविचारत्रितयस्याप्ये-कदैव विधानेन तयोरपि फलान्वितत्वसाम्यात् । परंपरासाधनस्या"प्यपाम सोमममृता-अभूमे"त्यादौ फलेन सह साक्षात्पाठदर्शनाच्च । अपिचाव्यवहितोत्तरवाक्यत्वयाणा-मपि सहपाठेन बहुविप्रकर्षाभावाद्बलवदर्थक्रमानुरोधेन "श्रोतव्यो मन्तव्यो निदि-ध्यासितव्यः साक्षात्कर्तव्य"इतिवाक्यान्तरसमाख्ययाच"स्वर्गकामो ज्योतिष्टोमेन यजेते"तियोगविभागेनान्वयवद्यथाश्रुतयोगविभागेन द्रष्टव्यो निदिध्यासितव्यो मन्त-व्यः श्रोतव्य इत्युद्देश्यतद्धेतुक्रमेणान्वयसंभवात् । (त. पु. ४० प. २२) * "ज्ञानस्य वस्तुनिवर्तकत्वं किं दृष्टबलात्किंवा श्रुतिबलात् । आद्येऽपि तत्किं विषयसम्बन्धिनं निवर्तयत्युताश्रयसम्बन्धिनं किंवोभयसम्बन्धिन" * मितिविकल्पं मनसि निधाय यदुक्तं विवरणे (वि. पु. ४० प. ४) * "चित्रावयविनि नीलविशिष्टद्रव्यज्ञानं स्वविषयं वा स्वविषयसमवेतं वा रसादिकं विरोधिनं वा पीतिमादिगुणं न निवर्तयति । स्वविषयानवबोध एव केवलस्तेन निवर्त्यते । स्वाश्रयगतं वस्तु ज्ञानेन निवर्तत इतिचेन्न । घटादिज्ञानेनाऽऽत्मगतधर्माधर्मादिगुणानिवृत्तेः । नचाश्रयविषयो-भयसम्बन्धिवस्तु ज्ञानेन निवर्तते । आत्मनः शरीरविषयज्ञानेन देहात्मसम्बन्धाद्यनि-वृत्ते" * रिति । तत्र तावत्पक्षत्रयमप्यसङ्गतम् । नहि वयं यत्सत्यं तत्सर्वं ज्ञानेन निवर्त्यमानं दृष्टमिति वा यज्ज्ञानं तद्यस्य कस्यचित्सत्यस्य निवर्तकं दृष्टमितिवा ब्रूमो येनेदमुक्तमनिष्टापादनं सङ्गच्छते । अपितु यथा सत्यस्याप्यज्ञानातिरिक्तस्य वस्तुनो वस्त्वंतरेणेव ज्ञानेनापि निवृत्तिर्लोके दृष्टा मुद्गरेण घटनिवृत्तेरिव रसविशे-षास्वादनेनारुचिपरिहारस्यापि दर्शनात् । तथेहापि प्रमाणे सति सत्यस्यैव बन्धस्य ज्ञानेन निवृत्तिरस्तु । अस्तिहि "दृष्ट्वैव तं मुच्यते नापरेण" "भिद्यते हृदयग्रन्थि-

श्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" । "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन" । "सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसी"त्यादि-श्रुतिस्मृतिरूपं प्रमाणं अतीतानन्तब्रह्मादियोगिषु ज्ञानबन्धनिवृत्त्योरन्वयव्यतिरेकौ चेति वदामः । एवंसति प्रमाणविधुरनीलादिज्ञानस्य नीलादिनिवर्तकत्वापादनं कुत्रोपयुज्यते । ननु ज्ञानमज्ञानस्यैव निवर्तकं दृष्टमतो दृष्टविरुद्धार्थे न सा श्रुतिः प्रमाणमितिचेन्न । ×उक्तरीत्या तदितरनिवर्तकत्वस्यापि दर्शनेनावधारणानुपपत्तावु-भयनिवर्तकत्वस्यापि संभवात् । नह्येकमेकस्यैव निवर्तकमिति नियमोऽस्ति । तमो-निवर्तकस्यैव दीपस्य तैलनिवर्तकत्वस्यापि दर्शनात् । कमलदलनिविडसंयोगवि-नाशकस्यैव सूर्योदयस्य कोकमिथुनशोकापनोदित्वदर्शनाच्च । न ह्यरुचिरज्ञानम् । किंतु रागाख्यरुच्यभाव एव । सच रागोत्पादकरसविशेषास्वादनाख्यरासनतदप-रोक्षज्ञानैकापोद्य इति कथं न तन्निवर्त्यः । तदुत्पादकस्यैव तदभावनिवर्तकत्वात् । नहि तदुद्देशेन सर्वजनैः क्रियमाणस्य ततोऽन्यत्फलम् । नच रुच्यात्मकराग एव स्वाभावस्य तस्य निवर्तक इति वाच्यम् । घटाभावनिवृत्तिरूपघटस्येव स्वप्रागभाव-निवृत्तिरूपस्य तस्य तदनिवर्तकत्वात् । नहि स्वयमेव स्वस्य निष्पादकम् । आत्माश्रयात् । अतः सुष्ठूक्तं रसविशेषास्वादनमेवारुचिनिवर्तकमिति । नच रसवि-शेषास्वादनेन रागोत्पत्तौ तदभावः स्वयमेव निवर्तत इति वाच्यम् । रागप्रागभाव-निवृत्तिरूपरागोत्पादकस्यैव तदभावनिवर्तकत्वापरिहारात् । किंच स्वयमेवेत्यस्य कारणं विनेत्यर्थाङ्गीकारेऽकारणकार्योत्पत्तिप्रसङ्गात् । रागोत्पादकेनैवेत्यङ्गीकारेऽस्म-दुक्तपक्षस्यैव स्थिरीकरणात् । किंच किमर्थमयं सर्वजनसिद्धानुभवान्यथीकरणप्रयासः परस्य । उक्तव्याप्तिबलादिति चेन्न । व्याप्तिसिद्धौ तद्बलेनानुभवान्यथीकरणम् । अनुभवान्यथीकरणे च व्यभिचाराभावेन व्याप्तिसिद्धिरित्यन्योन्याश्रयात् । एवंच महीमहीधराद्यनन्तपदार्थोत्पादकपरमेश्वरज्ञानस्य प्रवृत्त्यादिजनकसार्वजनीनज्ञानस्यच तत्तत्प्रागभावनिवर्तकत्वावश्यंभावेनानेकधा प्रशिथिलमूलेयं व्याप्तिः । कालादृष्टा-दिनिवर्तकान्तरसमावेशस्तूभयत्र समः । तेषां सर्वोत्पत्तिमन्निमित्तकारणत्वात् । अज्ञाननिवृत्तेरप्युत्पत्तिमत्त्वात् । किंच "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।

×रसविशेषेत्यादिना ।

क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" इति श्रुतौ हृदयग्रन्थिपदार्थत्वेन त्वदभिमताविद्यानिवृत्ताविव स्पष्टं कर्मसंशयनिवृत्तावपि "दृष्ट" इति सतिसप्तम्या ज्ञानस्यैव हेतुत्वश्रवणात्कथं न ज्ञानस्याज्ञानातिरिक्तनिवर्तकत्वे मानम् । नच वाच्यमुपादानाज्ञाननिवृत्त्यैव कर्मादिनिवृत्तिर्न साक्षाज्ज्ञानेनेति । श्रुतहान्यश्रुतग्रहापत्तेः । च शब्दानुपपत्तेश्च । एकनिमित्तसाध्यानेकसमुच्चयो हि तदर्थः । परंपरासाध्यत्वे तदयोगात् । न हि दण्डेन घटो जलाहरणं चेति प्रयोगः । अपि तु घटः परदण्डनं चेत्येव । अंतरा निमित्तान्तरानुक्तेर्न द्विमात्रसमुच्चयः । उपादाननिवृत्तिप्रणाड्या निवृत्तौ पृथगवक्तव्यत्वात् । जगन्निवृत्तेरपि वक्तव्यत्वाच्च । "सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि" इतिस्मृतौ "दृष्ट एवात्मनीश्वरे" इति समाख्याश्रुतौ चैवकारायोगाच्च । दर्शनान्यनिमित्तमनपेक्ष्योक्तफलस्य तदव्यवहितोत्तरक्षणभावित्वं तदर्थः । निमित्तान्तरसमावेशे क्रमिकोत्पत्तौ च कथमसौ युज्यते । न ह्यन्ने जात एव भोजनमितिवत्करप्रक्षाळनशयनमपेक्ष्योक्तफलस्य तदव्यवहितोत्तरक्षणभावित्वं वदन्ति । "तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैती"तिश्रुतौ पापनिवृत्त्युत्तरकालं "निरञ्जन"इत्यविद्यानिवृत्तिकथनाच्च । किंच कपिलादर्शनमिव भगवद्दर्शनं कुतो न साक्षात्पापनिवर्तकम् । न हि कपिलादर्शनमप्यविद्यानिवृत्तिप्रणाड्या पापनिवर्तकम् । जगदुपादानब्रह्माज्ञानस्य तेनानिवर्तनात् । अन्यथा गर्दभदर्शनस्यापि पापनिवर्तकत्वप्रसङ्गात् । कपिलायामेव साक्षाद्दृष्टायामपि वा पापानिवृत्तिप्रसङ्गात् । त्वन्मते कपिलादीनां ब्रह्मत्वेऽपि वेदान्तश्रवणाजन्यतज्ज्ञानस्याज्ञाननिवर्तकत्वानङ्गीकारात् । घटज्ञानस्य स्वनिवर्त्यघटज्ञानाभावानुमापकतत्संशयविपर्ययौ प्रति साक्षान्निवर्तकत्ववत् ब्रह्मज्ञानस्य साक्षात्संशयादिनिवर्तकत्वसंभवाच्च । ननु परममङ्गलतया साक्षादेव पुण्यं जनयित्वैव पापनिवर्तकं कपिलादर्शनमिति चेन्न । भगवद्दर्शनेऽपि तथात्वापातेनाज्ञानस्यापि साक्षाज्ज्ञाननिवर्त्यत्वाभावापातात् । कल्पनागौरवस्योभयत्र साम्यात् । ज्ञानस्याज्ञाननिवर्तकत्वे तदनपेक्षायां पापपरिहारार्थं विहितक्रियायां तत्परिहारे प्रायश्चित इव तदनपेक्षासाम्यात् । सति चैवं "दृष्टमात्रात्पुनन्ती"त्यादिस्मृतिरप्यनुकूलिता स्यात् । अन्यानपेक्षदर्शनमात्रेण कर्दमक्षालनमिव पापक्षालनरूपपवित्रीकरणं हि तदर्थः । किंच"अवलोक्य मुखं तेषामादित्य-

मवलोकये"दिति दुष्टावलोकनजनितपापप्रायश्चित्ततया विहितसूर्यदर्शनस्य साक्षात्पापनिवर्तकत्वमपरिहार्यमेवेति कथं ज्ञानमज्ञानस्यैव निवर्तकम्। न हि प्रायश्चित्तमपि पुण्यजनकम्। आवश्यकदुरितध्वंसेनैव चरितार्थत्वात्। तदर्थमेव विहितत्वाच्च। एवंच सकलदोषप्रायश्चित्तरूपं भगवद्दर्शनमपि साक्षादेव सकलदुष्कर्मनिर्मूलनमिति निःसीमा स्वत्परिकल्पितव्याप्तिभङ्गसीमा। "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ" "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुने"त्यादिनिर्णायकस्पष्टभगवद्वचनेभ्यश्च सुस्थोऽयमर्थः। नच वाच्यं प्रायश्चित्ततयैव तन्निवर्तकं न ज्ञानतयेति। किं तावता। ग्रन्थोक्तव्याप्तौ व्यभिचारापरिहारात्। एवं तर्हि ज्ञानतया ज्ञानमज्ञानस्यैव निवर्तकमित्येव व्याप्तिरस्त्वितियत्। तदपि न। पूर्वोक्तवक्ष्यमाणरसविशेषास्वादनेश्वरज्ञानकपिलादर्शनवायुस्पर्शानुभवादेर्ज्ञानतयैव तत्तन्निवर्तकत्वेन व्यभिचारतादवस्थ्यात्। नहि तदपि प्रायश्चित्तरूपं। किंच त्वन्मतेऽज्ञानानिवर्तकपरोक्षज्ञानसाधारणज्ञानत्वं कथमज्ञाननिवृत्ताववच्छेदकम्। नाप्यपरोक्षतया। रण्डागीतश्रवणजन्यापरोक्षे तदनिवर्तके गतत्वात्। मन्मतेऽज्ञाननिवर्तकपरोक्षज्ञानाव्याप्तेश्च। व्याप्तेरुभयवादिसंप्रतिपन्नत्वावश्यंभावाच्च। नापि वेदान्तश्रवणजन्यापरोक्षज्ञानतया। उक्तदोषापरिहारात्। त्वन्नयेऽज्ञाननिवर्तकघटाद्यपरोक्षेऽव्यापनात्। अन्यूनानधिकवृत्ति ह्यवच्छेदकम्। पक्षमात्रवृत्तित्वेन दृष्टान्तासंभवाच्च। अतोऽज्ञानतदभावादिसाधारणविरोधितयैवेति वाच्यम्। एवंच पुण्यवस्तुदर्शनस्य पापेन सहानवस्थानान्न कथं समः समाधिः। किंचैवं ज्ञानतयाऽज्ञानमात्रनिवर्तकेऽपि ज्ञाने आकारान्तरेणान्यनिवर्तकत्वस्यापि त्वद्रीत्यैव संभवेन ज्ञानेन बन्धनिवृत्त्याख्यसौत्रप्रयोजनस्य बन्धनिवर्तकतया विहितत्वेनैव निवर्तकत्वसंभवेनान्यथैवोपपत्तेरज्ञानकल्पकाभावप्रसङ्गाच्च। नहि ज्ञानतयेत्यसूत्रयत्सूत्रकारः। तथाच प्रकृतानुपयुक्तेयं व्याप्तिः स्यात्। किंच ज्ञानतया ज्ञानमज्ञानस्यैव निवर्तकमिति हि व्याप्तिशरीरं स्यात्। तच्च कुत्रापि न दृष्टम्। लोकसिद्धज्ञानतदभावयोर्घटतदभावसाधारणप्रतियोग्यनुयोगिभावेनैव निवर्त्यनिवर्तकभावात्। भगवद्दर्शनस्य च भक्त्यादिसाधारणभगवत्प्रसादहेतुतयैवाज्ञाननिवर्तकत्वात्। नचेदमस्माकमनिष्टम्। निगडबन्धमोचकराजदर्शनादिसाधारणमोचकपुरुषप्रसादहेतुतया भक्त्यादिसाधनसाधारण-

मोक्षहेतुत्वेन श्रुत्युक्तसाधनतया वा ब्रह्मदर्शनस्य साक्षाद्बन्धं प्रत्येव निवर्तकत्व-संभवात् । अन्यथा दैत्यादीनामपि तद्दर्शनेन बन्धनिवृत्तिप्रसङ्गात् । तथाच किम-ज्ञानपरिकल्पितत्वकल्पनया । अपि च ज्ञानमज्ञानस्यैव निवर्तकमुभयवादिसंप्रति-पत्त्या कुत्र दृष्टम् । लोकसिद्धज्ञानाभावरूपाज्ञाने घटाभावनिवृत्तिरूपो घट इव तन्निवृत्तिरूपमेव ज्ञानं न निवर्तकमिति सर्वजनसंप्रतिपन्नम् । अतो नेदमुक्तव्याप्ति-ग्रहणस्थलम् । भावरूपाज्ञानं तु न प्रतिवादिसंमतम् । कथंचित्संमतौ न ज्ञानं तन्मात्रनिवर्तकमिति संमतम् । किंत्वज्ञानप्रकृतिबन्धदुष्कर्मसंशयविपर्ययादीनां च निवर्तकमभिमतम् । अतो नेदमपि व्याप्तिग्रहणस्थलम् । "अज्ञानस्यैव निवर्तकं दृष्ट"मिति सावधारणत्वाद्भवदभिमतव्याप्तेः । अन्यथोभयनिवर्तकतया बन्धनिवर्तक-त्वस्यापि संभवात् । किंच परंपरया ज्ञानेनाज्ञानोपादानकजगन्निवृत्तेस्त्वयाऽप्यङ्गी-काराज्ज्ञानमज्ञानस्यैव साक्षान्निवर्तकमिति व्याप्तिर्वक्तव्या । साच प्रतिवाद्यसम्म-तैव । ज्ञानेन प्रसन्नः परमात्माऽज्ञानं निवर्तयतीति परेणाङ्गीकारात् । अतो व्याप्ति-ग्रहणस्थलाभावाच्च प्रशिथिलमूलेयं व्याप्तिः । उक्तरीत्या स्वजन्यप्रसादादिकमन्त-र्भाव्य परंपरया बन्धनिवर्तकत्वस्यैव संभवेन प्रकृतानुपयुक्ता च । अपिच न केवलं ज्ञानमज्ञानस्यैव निवर्तकं कुत्रापि न दृष्टम् । किंतु वायुस्पर्शानुभवेन घर्मजदुःख-निवृत्तेरुदकरसानुभवेन तृण्निवृत्तेरौषधरसपानेन रोगनिवृत्तेश्च सार्वजनीनतया दर्शनेन ज्ञानाभावनिवृत्तिरूपतया तदनिवर्तकं ज्ञानं लोके अज्ञानातिरिक्तस्यैव निवर्तकं दृष्टम् । लोकदृष्ट्या च व्याप्तिर्ग्राह्या । एवंच त्वयाऽपि साक्षाज्ज्ञानेनाज्ञानातिरिक्त-बन्धादेरेव निवृत्तिर्वक्तव्येति किमुक्तवक्ष्यमाणज्ञानबन्धादिनिष्ठनिवर्तकनिवर्त्यभा-वानुभावकमानापवादकम् । न ह्यनुत्पन्नज्वलनज्वाला गृहसमूहं दहेत । नहि वायुस्पर्शानुभवादिना घर्मजदुःखादिनिवृत्ताववान्तरप्रणाडी काचिदस्ति । येन साक्षान्निवर्तकता न स्यात् । प्रथममङ्गव्यापिविरोधिघर्मजदुःखनिवृत्तिं विना तच्छैत्यसुखादेरनवसरदुस्थत्वात् । नाप्यन्याकारेण निवर्तकता । येन ज्ञानत्वेन निवर्तकता न स्यात् शैत्यानुभवत्वेनैव घर्मजदुःखनिवर्तकत्वात् । नच वायुसंयोगेन घर्मनिवृत्तौ कारणाभावादेव तज्जन्यदुःखनिवृत्तिरिति वाच्यम् । चेतनस्य सतो वायुसंयोगेसति तत्स्पर्शानुभवस्यावर्जनीयत्वात् । स्वेदादिजनकाङ्गघर्मे सत्येव

वायुस्पर्शाव्यवहितोत्तरक्षण एव केवलदुःखनिवृत्तेरनुभवात् । घर्मोद्रेककालीन-तालवृन्तानिलस्पर्शानुभवेन घर्मे सत्येव तात्कालिकदुःखनिवृत्तेरनुभवसिद्धत्वात् । एवमुदपानेऽपि द्रष्टव्यम् । ज्वरितस्य तन्निमित्तोष्णे सत्येव जलरससेवया तात्कालिकतृष्णिवृत्तेरनुभवसिद्धत्वात् । औषधरसानुभवेन तु रोगहेतुकफादिदोषनिवृत्तिरेव न रोगनिवृत्तिरिति चेन्न । तस्यैव दोषस्याज्ञानातिरिक्तस्य साक्षाज्ज्ञानत्वेनैव ज्ञाननिवर्त्यतया भवदुक्तव्याप्तिभङ्गात् । अस्मदुक्तव्याप्तिसिद्धेश्च । किंच लोकसिद्धव्यवहारानुरोधेन सर्वं कल्पनीयम् । न स्वमताऽऽग्रहेण । लोकश्च तत्तत्फलोद्देशेन तत्रतत्र प्रवर्तमानः साक्षादेव तस्य तस्य तत्तत्फलहेतुतां मनुत इति सुस्थाऽस्मदुक्ता व्याप्तिः । प्रागुक्तनिरवकाशबहुतरनिदर्शनसद्भावाच्च । भवदुक्ता तु व्याप्तिरज्ञानमूलैव । अपिच संस्कारासाधारणकारणज्ञानस्य ज्ञानत्वेनैव साक्षात्तत्प्रागभावनिवर्तकत्वमिति भग्ना भवद्व्याप्तिः । अभग्ना चास्मद्व्याप्तिः । किंचेश्वरज्ञानं ज्ञानत्वेनैव सकलकार्यविनाशेऽपि साक्षाद्धेतुरिति कोटिशो व्यभिचरिता भवद्व्याप्तिः । नहि कालेकाले सकलकार्यनिवृत्तिहेतोरीश्वरज्ञानस्य कालादिसमानयोगक्षेमस्य प्रणाड्यन्तरमस्ति । "देवस्यैष स्वभावोऽय"मिति श्रुतेः । अनाद्यविद्यांतु श्रवणादिजन्यप्रसादमन्तर्भाव्यैव निवर्तयतीति नास्मदुक्तव्याप्तिभङ्गः । भवदभिमताज्ञानातिरिक्तस्यैववा आत्माश्रितानादिभावरूपाज्ञानातिरिक्तस्यैव वा साक्षान्निवर्तकमिति व्याप्तिः । अतो ज्ञानप्रागभावस्य साक्षात्तेन निवृत्तावपि नास्मदुक्तव्याप्तिसंकोचः । अज्ञानातिरिक्तस्यैव प्रायो निवर्तकमिति वा व्याप्तिः । परपरिहासार्थमेवैतद्व्याप्तिकथनमिति द्रष्टव्यम् । एतेन प्रसाध्याङ्केयं व्याप्तिरित्यपि परास्तम् । उक्तरीत्या व्याप्तिग्रहणस्थलशून्यतया व्यभिचारसहस्रसंकुलतया च प्रसाधयितुमप्यशक्यत्वात् । किंच किमर्थश्चायमसिद्धव्याप्तिप्रसाधनप्रयासः परस्य । लोकवेदसिद्धाविरुद्धतत्तत्कार्यकारणभावोररीकारेण सर्वसामञ्जस्यात् । नहि कोऽप्यप्रसिद्धं शशविषाणं व्यभिचरितपशुत्वादिना प्रसाध्य तेन परपक्षं प्रतिक्षेप्तुं यतते । सौत्रप्रयोजननिर्वाहार्थमिति चेन्न । भवत्कपोलकल्पिताप्रामाणिकैतद्व्याप्तेरप्रस्तावेऽपि पुण्येन पापस्येव ज्ञानेनैव साक्षात्परंपरयावा बन्धस्य निवृत्तिसंभवेन प्रयोजनस्याप्रतिहतत्वात् । किंच भावाभावयोरेव स्वभावतो विरोधेऽन्यत्र कल्प्य एव । स चावश्यकत्वाद्बहुप्रमाण-

सद्भावाच्च ज्ञानत्वन्धयोरेव भावयोः कल्प्यः । व्याप्तिस्तु स्वभावविरोध्यभावरूपा- ज्ञानमात्रविषयेत्यतिविशदं सौत्रप्रयोजनम् । एवंच महदिदमकौशलत्रयं परकीय- भाष्यपञ्चपादिकादेः । यदयुक्तानुपयुक्तलोकासंमतव्याप्तिपक्षपातेन सकलप्रमाणा- नामन्यथीकरणं नाम । प्रसक्तानुप्रसक्त्येदमुक्तम् । विस्तरस्तु पुनरेतद्व्याप्तिखण्ड- नावसरे द्रष्टव्यः । एतेनैव ज्ञानत्वेन ज्ञाननिवर्त्यत्वं मिथ्यात्वमित्यपि परास्तम् । उक्तरीत्या सत्य एवारुच्यादावनन्तजगत्प्रागभावेषु घर्मजदुःखादौ संस्कारप्राग- भावेषु कार्यप्रपञ्चमात्रेच तत्वविन्मतेऽपि ज्ञानत्वेन ज्ञाननिवर्त्यत्वसद्भावेन सिद्ध- साधनत्वापातात् । गगनादिनित्यप्रपञ्चे बाधाच्च । नच वाच्यं ब्रह्मव्यतिरिक्तं सर्वमनित्यमेवेति । श्रुतिस्मृतिविरोधात् । सर्वविनाश एव तथापि बाधाच्च । तस्या- प्यनित्यत्वे पुनः सर्वोन्मज्जनप्रसङ्गः । अभावाभावस्य भावरूपत्वात् । उक्तरीत्या तत्रापि मते विरोधितया साक्षात्परंपरयाच ज्ञाननिवर्त्येऽज्ञानादिजगति ज्ञानत्वेन ज्ञाननिवर्त्यत्वस्य बाधात् । ज्ञानत्वापरोक्षप्रमात्वयोस्त्वद्रीत्यैवाज्ञाननिवर्तकपरोक्षज्ञान- रण्डागीतश्रवणजब्रह्मापरोक्षप्रमागतत्वेनातिप्रसक्तत्वात् । श्रुत्यनुत्पन्नत्वान्न सा प्रमेति चेन्न । अर्थाबाधातिरिक्तप्रामाण्याभावात् । निवर्तकस्य सर्वस्य स्वनिष्ठासाधारण- धर्मपुरस्कारेणैव निवर्तकत्वं स्वभाव इति ज्ञानत्वेन ज्ञाननिवर्त्यत्वेऽप्यनित्यत्व- मात्रप्राप्त्या त्वदभिलषितमिथ्यात्वालाभेनार्थान्तरत्वाच्च । अपिच ब्रह्मविषयकका- लान्तरभाव्यपरोक्षदर्शनेन ज्ञानेन निवृत्तिः परस्याभिमता । साचेदानीं विनष्टविन- श्यद्घटाद्यनन्तपदार्थेषु बाधिता । नष्टस्य पुनर्नाशायोगात् । कारणरूपेण तेषामपि ज्ञानेन निवृत्तिरस्तीति चेन्न । कपालाद्यवस्थाहि घटादेः कारणरूपम् । तस्या अपीदानी- मेव निवृत्तत्वात् । अज्ञानमपि घटाद्युपादानमिति चेन्न । मृदाद्युपादानवदुपलंभप्रस- ङ्गात् । अनुपलभ्यमानस्यापि तूष्णीं कल्पने कल्पनागौरवात् । अयुक्तेरनुपयोगाच्च । अहमज्ञ इत्यन्तरेवाज्ञानोपलंभात् । ज्ञाननिवर्त्यत्वान्यथानुपपत्त्या तत्रापि तत्कल्पनं तु कल्पकाभावादेवदूरापास्तम् । अन्यथा अन्योन्याश्रयात् । किंच नष्टस्य पुनर्नाशायो- गात्कारणरूपेण निवृत्तिर्नाम तत्कारणाज्ञानस्यैव ज्ञानेन निवृत्तिरित्युक्तं स्यात् । एवंच तन्मात्रमेव मिथ्या स्यान्न कार्यरूपमपि प्रयोजकाभावात् । अभेदात्तन्मिथ्या- त्वमेवैतन्मिथ्यात्वं यदि तर्ह्येतत्सत्यत्वमेव तत्सत्यत्वं स्यादिति नकिंचिन्मिथ्या स्यात् ।

मिथ्याभूताज्ञानकार्यत्वेनास्य यथावश्यकं मिथ्यात्वं तर्हि सत्यभूतघटाद्युपादानत्वेन तस्य सत्यत्वमेवावश्यकम् । अभेदस्य पक्षपाताभावाद्दृष्टानुसारेणादृष्टस्य कल्प्यत्वाच्च शुक्तिरजतादावेतादृशमिथ्यात्वाभावेन दृष्टान्तस्य साध्यवैकल्याच्च । मन्मते तस्या-सत्त्वेनोत्पत्तिविनाशयोरुभयोरप्यभावेन ज्ञानविनाश्यताया दूरापास्तत्वात् । त्वन्मते च प्रतीतिमात्रशरीरस्य तस्य प्रतीत्यपगमेऽपगमनियमेन कालान्तरभाविबाधरूपज्ञान-विनाश्यत्वस्याभावादेव । निवृत्तिर्बाधश्चेत्तर्हि शेषवैयर्थ्यम् । बाध्यत्वस्यैव मिथ्या-स्वरूपत्वात् । ज्ञानस्य सूत्राभिप्रेतबन्धनिवर्तकत्वान्यथानुपपत्त्या ह्यज्ञानं परेण कल्प्यते । एवं चेदापादकस्य प्रतिवाद्यसिद्धिः । नहि ज्ञानबाध्यत्वं बन्धस्य परोऽ-गीकुरुते । ज्ञानमज्ञानस्यैव निवर्तकमिति व्याप्तेस्त्वद्रीत्यैव भङ्गप्रसङ्गश्च । नहि त्वन्मतेऽपि ज्ञानमज्ञानस्यैव बाधकम् । उभयथापि ज्ञानत्वेन ज्ञाननिवर्त्यत्वं न मिथ्यात्वम् । नच तदपि मिथ्यात्वम् । उपरिनिरसिष्यमाणत्वादितिदिक् । तस्मात्प्रमाणे सति सत्यस्यैव ज्ञानेनान्येन वा निवृत्तिर्दृष्टेति दृष्टबलाद्बन्धस्य सत्यस्यैव प्रामाणिकं ज्ञानविनाश्यत्वमित्यङ्गीकारे प्रमाणविधुरनीलादिज्ञानस्य नीलादिनि-वर्तकत्वापादनं स्वाकौशलसंपादनमेवेति पक्षत्रयसाधारणं त्रणम् । नापि ×प्रथमः । आवयोर्मते चित्राख्यरूपस्यैकत्वेन चित्रावयविनि नीलविशिष्टप्रतीतेरेवाभावात् । यदत्रोक्त तत्वदीपने (त. पु. ४० प. २६) * "चित्रावयव्यारंभकनीलविशिष्ट-वस्तुज्ञानस्यानिवर्तकत्वोदाहृतेर्न विरोधः" * इति । तन्न । तथासति तस्य नीलैकाश्रयतया तत्र पीतगुणाभावेन * स्वविषयसमवेतं विरोधिनं वा पीति-मादिगुणं ननिवर्तयति * इत्यस्यासङ्गतिप्रसङ्गात् । यच्च (त. पु. ४०प. २७) * नानारूपसमाहारश्चित्रमिति व्योमशिवदृष्टिं प्रतिभासंवाऽपेक्ष्य * इति तत्व-दीपनं तदपि न । आवयोरसंप्रतिपत्त्याऽनुदाहरणस्थलत्वेनाऽऽद्यस्यायोगात् । अप्रमात्वेनाप्यनिवर्तकत्वोपपत्त्या द्वितीयस्याप्रयोजकत्वात् । किंच यस्मिन्नंशे नील-विशिष्टप्रतीतिस्ततो विरोधिपीतिमगुणस्य निवर्तनान्न निवर्तयतीत्यसिद्धम् । नहि नीलांशएव पीतिमगुणोऽप्यस्ति । नच निवृत्तिर्नाश इति वाच्यम् । तस्मिन्नंशे प्रति-योगिन एवासत्त्वेन स्वसमानदेशे प्रतियोगिसत्त्वपूर्वकत्वनियतविनाशस्याप्रसक्तेरेव ।

×पु. १६ प. १४ आद्येऽपि तत्किं विषयसंबन्धिनं निवर्तयतीति ।

अन्यत्रच तत्सत्त्वेऽपि व्यधिकरणत्वात् । स्वव्यधिकरणघटं प्रति मुद्गरस्येव विनाशकत्वाप्रसक्तेरेव । किंच नीलस्य पीतेन सह तदभावसमानाधिकरणत्वरूपसहानवस्थानेनैव विरोधितया "यक्षानुरूपो बलि"रिति न्यायेन स्वाधिकरणेऽन्याभावसंपादनेनैव कृतकृत्यतया तद्ज्ञानस्यापि तावतैव चरितार्थत्वात् । ईश्वरस्य तु ध्यातृमनसि तत्संस्कारेण सहावस्थितस्यानर्थरूपसंसारनाशकत्वेनैव विरोध इति तद्दर्शनेनापि तन्नाशावश्यंभावात् । राजदर्शनेन निगडबन्धनिवृत्तिदर्शनात् । किंचायं खलु परस्याशयः । सत्यस्यैव बन्धस्य ज्ञानान्निवृत्तौ सत्यत्वाविशेषान्नीलज्ञानान्नीलादिकमपि निवर्तेतेति । तदनुपपन्नम् । नहि वयं सत्यत्वं ज्ञाननिवर्त्यताप्रयोजकमिति वदामः । ब्रह्मणोऽपि निवृत्तिप्रसङ्गात् । अपितु ब्रह्मज्ञाने सति बन्धनिवृत्तिः शुकनारदादौ, तदभावे तदभावोऽस्मदादावित्यन्वयव्यतिरेकावेव प्रयोजकौ वदामः । तच्च दृष्टम् । तथाविधराजदर्शनादेर्निगडबन्धनिवर्तकत्वदर्शनात् । दण्डादेर्घटजनकत्वदर्शनाच्च । नच वाच्यं राजदर्शनं बहुव्यवधानादहेतुरिति । व्याप्तिज्ञानादेरनुमित्याद्यहेतुत्वप्रसङ्गात् । हेतुत्वेन शिष्टव्यवहारस्तूभयत्र समः । एवंचान्वयव्यतिरेकासहकृतनीलज्ञानं नीलादिकमपि निवर्तयेदित्यतिप्रसङ्गकथनं स्वाकौशलप्रथनमेव । नहि दण्डस्य घटहेतुतायां रासभस्यापि तद्धेतुत्वं केऽपि कथयन्ति । अपिचेश्वरज्ञानेन सत्यसंसारनाशे नीलज्ञानेनापि पीतादिनाशः स्यादिति वदता व्याघ्रेण गोविनाशे पशुत्वाविशेषान्महिषेणापि तन्नाशः कुतो नाशंक्यते । यदिच फलबलोन्नेयो विरोधो गोव्याघ्रयोरेव न गोमहिषयोरिति मतम् । तर्हीहापि फलबलोन्नेयो विरोध ईश्वरदर्शनसंसारयोरेव न नीलज्ञाननीलयोरिति समम् । किंच यदि ज्ञानेनावस्तुभूतं निवर्तते तर्हि नयनगतपित्तद्रव्यनीलरक्तादिद्रव्यसमागमवशाच्चित्तभ्रमविषये स्फटिकशिलादौ संभवन्नीलविशिष्टज्ञानं मिथ्याभूतं स्वविषयंवा स्वविषयसमवेतत्वेन भातं पीतगुणं वा कुतो न निवर्तयेत् । यदिच न ज्ञानमात्रं मिथ्याभूतनिवर्तकं किंत्वज्ञानविरोध्येव । इदन्तु ज्ञानं तदुपोद्बलितं न तन्निवर्तकमिति मन्यसे तर्हि ममापि न ज्ञानमात्रं सत्यपदार्थनिवर्तकम् । किंतु मङ्गलरूपेश्वरादिदर्शनममङ्गलसंसारादेः पवित्रसेत्वादिदर्शनमपवित्रपापादेरेव निवर्तकम् । नीलपीतौ तु न मङ्गलामङ्गलादिरूपाविति नैकदर्शनेनापरनिवृत्तिरिति संतोष्टव्यम् । अपिच

ज्ञानमज्ञाननिवर्तकं चेज्ज्ञानत्वाविशेषाद्धटापरोक्षज्ञानमिव तत्परोक्षज्ञानमपि कुतो नाज्ञाननिवर्तकम् । तथाच यथा ज्ञानत्वाविशेषेऽपि किंचिदज्ञाननिवर्तकं किंचिच्च नेति तव मते विभागः । एवं ममापीश्वरज्ञानं सत्यनिवर्तकं न नीलादिज्ञानमित्यस्तु विवेकः । यदिच परोक्षत्वापरोक्षत्वाभ्यां विशेष इति ब्रूषे तर्हि वयमपि लौकिक-त्वालौकिकत्वाभ्यां श्रवणादिजन्यत्वतदजन्यत्वाभ्यां विशेषं ब्रूमः । यदिच परोक्ष-तयाऽस्पष्टत्वेनासमर्थत्वान्नैकमज्ञाननिवर्तकमिति मतं तर्ह्यसमर्थपदार्थविषयत्वेनासमर्थं नीलादिज्ञानं न पीतादिनिवर्तकम् । समर्थपरमेश्वरदर्शनं तु तत एव महासमर्थं सत् परमेश्वरसेवकजनानर्थरूपसंसारनिवर्तकमित्यस्तु । दृश्यते हि समर्थराजादिदर्शना-न्निगडादिबन्धनिवृत्तिर्नत्वसमर्थभिक्षुकदर्शनेन । एवं सत्यर्थसामर्थ्यादेवाज्ञाननि-वृत्तिर्न दर्शनसामर्थ्यादित्यायातमिति चेत् । किंनेश्छिन्नम । "यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" । "मामेव ये प्रपद्यन्ते मायामेतां तरंति ते" । "जयजय जह्यजामजित दोषगृहीतगुणा"मित्यादौ श्रवणात् स्मरणाच्च । अद्वितीयाद्यर्थकरण्डागीतश्रवणजनितदर्शनेनारोपाविनाभूताधिष्ठानब्रह्मदर्शनेन चानि-वृत्ताज्ञानस्य साङ्गवेदान्तश्रवणजनितदर्शननिवर्त्यत्वं वदतस्तवापि वेदान्तश्रवणरूप-करणसामर्थ्यादेवाज्ञाननिवृत्तिर्न दर्शनसामर्थ्यादिति कथं नायातम् । तदाज्ञारूप-वेदान्तश्रवणस्य तावत्सामर्थ्यमङ्गीकुर्वता कथं परमेश्वरस्य तस्यैव न तदङ्गीकार्यम् । युक्तं चैतत् । स्वमहामाहात्म्यगोचराविच्छिन्नपरोक्षज्ञानप्रवाहरूपनिदिध्यासनेनैव च प्रसन्नः परमात्माऽज्ञानमावरणं निवर्त्याऽऽत्मानं दर्शयति । दर्शनेन च ततोऽप्य-धिकप्रसन्नः बन्धं च नाशयतीति । ननु दर्शनेनैवावरणाविद्यानिवृत्तिरिति वक्तुं युक्तम् । तथासत्यन्योन्याश्रयात् । ब्रह्मावरकाज्ञाननिवृत्तौ तदपरोक्षदर्शनम । अपरो-क्षदर्शनेनैवचाज्ञाननिवृत्तिरिति कथं नान्योन्यसंश्रयः । "यन्मायया मुषितचेतस ईश-दैत्यमर्त्यादयः किमुत शश्वदभद्रवृत्ता" इतिभागवतोक्त्यांऽतःकरणवृत्तेरेवाविद्यावरण-प्रतिबद्धत्वश्रवणात् । घटावरककुड्यादेर्मनोवृत्तिं प्रत्येव प्रतिबन्धकत्वदर्शनाच्च । नचावरणे सत्येव दर्शनोदय इति वाच्यम् । उक्तवचनविरोधात् । कथं चित्प्रागवि-रोधाभावे तेनैव तन्निवृत्तिरित्यस्यैवाकस्मिकत्वापातात् । अदृष्टत्वात् । आवरणत्व-व्याकोपात् । सदा दर्शनप्रसङ्गात् । आवरणभङ्गमन्तरेणार्थप्रतिपत्त्ययोगात्तद्भङ्गो

वक्तव्य इत्यावरणविनाशमन्तरेण विषयावभासायोगादिति ब्रह्मज्ञानात्प्रतिबन्धनिवृत्तिमन्तरेण विषयावभासायोगात् । त्वन्मते स्वरूपज्ञानाविरोध्यज्ञानस्य मनोवृत्तिं प्रत्येवावरणत्वावश्यंभावेन (वि. पु.१२४प.५) * "ज्ञाननिवर्त्यस्य चाज्ञानत्वात्"* इति ×वक्ष्यमाणतत्वदीपनविवरणविरोधात् । कथंचिद्विरोधाभावे तेनैव तन्निवृत्तिरित्यस्यैवाकस्मिकत्वापातात् । अनङ्गीकारात्प्रत्यगात्मस्वरूपत्वेन योग्यस्यात्मतत्वस्योक्तरीत्याऽप्रतिबद्धान्तःकरणवृत्त्या सदाऽपरोक्षीकरणावश्यंभावेनापरोक्षप्रमाणवृत्तिनिवर्त्याज्ञानस्य गर्भस्रावेणैव विनाशापाताच्च । विशिष्ट एवात्मा मनोविषयो न शुद्ध इतिचेत्किं तावता । विशिष्टग्राहिणैव तेनाप्रतिबद्धयोग्यविशेष्यस्यापि यावत्स्वरूपं ग्राह्यत्वादेव । नहि दण्डविशिष्टदेवदत्तग्राहकं चक्षुरनावृतदेवदत्तकरचरणाद्यग्राहकम् । किंतु घटादिप्रतिबन्धे सत्येव । अत इदानीं मनस आत्मतत्वाग्रहणमविद्याख्यप्रतिबन्धादेवेति वाच्यम् । तथाच कथं नान्योन्याश्रयः । नापि तज्ज्ञानं देवदत्तकरचरणाज्ञाननिवर्तकम् । घटादिविशिष्टज्ञानस्यापि अज्ञाननिवर्तकत्वाङ्गीकारात् । सविलासाविद्यायाश्चरमज्ञाननिवर्त्यत्वेऽपि यत्रयत्र प्रमाणप्रसरः तत्तन्मात्रनिष्ठाविद्यायाः कटवदपसरणस्य विनाशस्य वा त्वयाऽप्यङ्गीकारेण कथं नाविद्यागर्भस्रावः । स्वरूपाविरोधिनो बाह्यज्ञानाप्रतिबन्धकत्वे कथं नावरणत्वव्याकोपः। अतो यत्किंचिदेतत् । कथं तर्ह्यन्धकारे सत्येव प्रदीपोदय इति चेत् । सत्यम् । विषयानपेक्षस्य तस्य विषयावरके तमसि सत्यप्युत्पत्तेरप्रत्यूहत्वात् । अपरोक्षावभासस्य तु विषयसापेक्षस्य कथं तदावरके सत्युदयः । अदृष्टत्वादेव । न ह्यन्धकारे सति चक्षुषा तदावृतघटाद्यपरोक्षावभासः । अतो वज्रलेपायित इतरेतराश्रयः । परोक्षज्ञानस्य च नावरणं प्रतिबन्धकम् । पर्वतार्वाग्भागस्थितवह्न्यादेरनुमानदर्शनात् । किंच परमतेऽपरोक्षज्ञानमिव परोक्षज्ञानं कुतो नाज्ञाननिवर्तकम् । अस्पष्टत्वादितिचेन्न । एवमप्यस्पष्टप्रकाशस्याल्पतमोनिवर्तकत्ववदल्पाज्ञाननिवर्तकत्वापरिहारात् । अपिच प्रमाणसद्भावादिदमङ्गीक्रियते उत स्वमतदुराग्रहात् । नाद्यः । स्मृतेऽनुमित उपमित उपदिष्टे वाऽर्थे न ज्ञानामीतिव्यवहाराभावात् । न द्वितीयः । अप्रयोजकत्वात् । अतो न प्रथमपक्षो युक्ति-

×अयमर्थतोऽनुवादः । तत्वदीपनपङ्क्तिस्तु ज्ञाननिवर्त्यमज्ञानं प्रसिद्धमिति । (त. पु. २१० प. १९)

सहः । नापि द्वितीयः । तत्रापि घटज्ञानेनात्मन्यारोपितकर्तृत्वभोक्तृत्वक्षणिकत्वादेरनिवर्तनेन ज्ञानमात्माश्रितावस्तुनिवर्तकमित्यस्यापि त्यागापातात् । नापि तृतीयः । आत्मनो देहज्ञानेनावस्तुभूतदेहात्मैक्यादेरनिवर्तनात् । यदि च वेदान्तविचारजनितमात्मदर्शनमेव तन्निवर्तकं न दर्शनमात्रमिति मतम् । तर्हि तादृशेश्वरदर्शनमेव भवनिवर्तकं न यत्किंचिद्दर्शनं यस्यकस्यचिन्निवर्तकम् । किंच घटज्ञानं धर्मादिकमविरोधादेव न निवर्तयति । परमसुहृद्भूतब्रह्मदर्शनं तु स्वविरोधिनं दुःखरूपं संसारं प्रियमुखनिरीक्षणं तददर्शनजं दुःखमिव कथं न निवर्तयेत् । नचवाच्यं प्रियमुखनिरीक्षणेन स्वविरोध्यदर्शननाशे कारणनाशादेव दुःखनिवृत्तिरिति । एवमपि दुःखकारणस्य दर्शनप्रागभावरूपादर्शनस्य नाशो दर्शनमेवेति कारणनाशाद्दुःखनिवृत्तिरिति वदतापि वाचोभंग्यन्तरेण दर्शनाद्दुःखनिवृत्तिरित्येवोक्तत्वेनास्मदभीष्टसिद्धेरन्यूनत्वात् । नच प्रियसंप्रयोग एव दुःखनिवर्तक इति वाच्यम् । पृष्ठतस्तत्संप्रयोगेऽपि तदनिवर्तनात् । किंच तत्रापि ब्रह्मज्ञानं बन्धोपादानाविद्यानिवर्तकं चेद्घटज्ञानमपि कुतो न तन्निवर्तकम् । समानविषययोरेव निवर्त्यनिवर्तकभावदर्शनान्न घटज्ञानं ब्रह्माज्ञाननिवर्तकमिति यदि तर्हि प्रमाणसिद्धनिवर्तकभाववतो मुद्गरादेरेव घटादिनिवर्तकत्वदर्शनात् "तदा विद्वान् पुण्यपापे विधूय" "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशाचि"त्यादिना धर्माधर्मादिनिवर्तकत्वेन प्रमितब्रह्मज्ञानेनैव धर्मादिनिवृत्तिर्न घटज्ञानेनेति समं समाधानम् । तस्मादसंबद्धोऽयं प्रलापकलापोऽज्ञजनबन्धनायैव न युक्तिनिबन्धन इत्युपेक्षणीयोऽस्मादृशां सूक्ष्मदृशाम् । यच्चोक्तं तत्वदीपने (त. पु. ४२ प. ३२) * सेतुसाक्षात्कारमात्राद्दुरितनिवृत्तिर्न स्मृत्यर्थः । सेतुस्थानां म्लेच्छानामपि दुरितनिवृत्त्याऽक्षयफलभागित्वप्रसक्तेः । किंतु दूरदेशगतछत्रपादुकाविधुरत्वस्वकृतोद्घोषणादिनियमकलापयुक्तस्य सेतुदेशप्राप्त्या कल्मषनिवृत्ति * रिति । तदयुक्तम् । "काशीवासफलं लभेत्" "तद्देशवासिनां मुक्तिः किमु तत्तीरवासिनाम्" "द्वारकावासिनः सर्वे नरा नार्यश्चतुर्भुजाः" इत्यादिस्मृतौ यात्रातोऽपि क्षेत्रवासस्याधिकफलश्रवणेन सेतुस्थानां पापनिवृत्तेरिष्टतया "सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहती"तिस्मृतेर्यथाश्रुतार्थपरित्यागे कारणाभावात् । सेतौ स्थित्वा कृतपापस्यापि निवृत्तिप्रसङ्ग इति चेन्न । तत्रापि यात्रायां प्रतिपदं क्रिय-

माणपापस्यापि परिहारप्रसङ्गात् । पश्चात्पापमकुर्वतः प्राचीनपापेन निर्विण्णस्य तत्परिहारस्तूभयत्र समः । प्रामादिकतत्कालकृतपापपरिहारोऽप्युभयत्र समः । नहि पुण्यक्षेत्रे प्रमादात्कृतं पापं तद्दर्शनादिना न निवर्तत इत्यस्ति । एवंतर्हि बहूनां मोक्षापत्तिरिचेन्न । एकजीवप्रयत्नेन सर्वजीवमोक्षं वदतः परस्य सेतुस्थकतिपयजन-कैवल्यस्याभयंकरत्वात् । अपिच सेतुस्थेष्वपीतस्ततः संचरत्सु सेतुपादस्पर्शरूपसेतु-प्राप्तेश्च सदा विद्यमानत्वात्त्वदुक्तन्यायेनैव साऽपि पापनिवर्तिका न स्यात् । यात्राऽ-व्यवहितोत्तरकालीना प्राप्तिश्चेत्तादृशं दर्शनमेवास्तु श्रुतत्वात् । नतु प्राप्तिरश्रुतत्वात् । ज्ञाने प्रद्वेषः कर्मणि श्रद्धा च कर्मिणामेवोचिता नतु ज्ञानिनस्तव । यत्तु "साधूनां दर्शनं पुण्यं" "दर्शनादेव साधवः" "वैकुण्ठप्रियदर्शनमि"त्यादिस्मृतौ पापा-पहारित्वेन प्रसिद्धदर्शनसजातीयसाक्षात्स्मृत्युक्तसेतुदर्शनपरित्यागेन "गौर्नपदा स्प्रष्टव्या" "पादस्पर्शं क्षमस्व मे"इत्यादौ पापप्रदत्वेन प्रसिद्धायाः सेतुपादस्पर्श-रूपतत्प्राप्तेरेव दुरितनिवर्तकत्वकथनं तदतितुच्छम् । स्मृत्यर्थपरिरक्षणायोक्तनियम-कलापपूर्वकस्य स्मृत्युक्तसेतुदर्शनस्यैवैवमपि पापनिवर्तकत्वेनोक्तिसंभवात् । अन्यथा श्रुतहानेरश्रुतग्रहणस्य च प्रसङ्गात् । नच तदेवास्त्विति वाच्यम् । ज्ञान-स्याज्ञानातिरिक्तनिवर्तकत्वप्राप्त्याऽस्मदिष्टसिद्धेरन्यूनत्वात् । ब्रह्मदर्शनेऽपि यज्ञदा-नगुरूपसत्त्यादिनियमकलापपूर्वकत्वस्योभयवादिसंप्रतिपन्नत्वात् । किंचवमङ्गहीन-ज्योतिष्टोमादपि स्वर्गफलादर्शनात्साङ्गतत्सामग्र्या एव स्वर्गसाधनता स्यान्न ज्यो-तिष्टोमस्य । यदिच ज्योतिष्टोमेनेतितृतीयया श्रुतकरणतावज्ज्योतिष्टोमस्यापि तद्धेतु-त्वमावश्यकम् । तर्हि "दृष्ट्वैव तं मुच्यते"इत्यत्र मोक्षं प्रति ब्रह्मदर्शनस्येव "सेतुं दृष्ट्वे"ति क्त्वाप्रत्ययबलाच्छ्रुता सेतुदर्शनकारणता कुतो नाङ्गीकार्या । श्रुतहानेरुभयत्र साम्यात् । सेतुस्थानां सुतरां पापनिवृत्त्यङ्गीकारेण यथाश्रुतार्थेऽनुपपत्त्यभावस्या-स्मत्पक्ष आधिक्याच्च । अपि चोक्तविधया शुष्कब्रह्मदर्शनमात्रस्याज्ञानानिवर्तकतया त्वदभिमतब्रह्मदर्शनविशेषहेतुभूतस्य पुण्यगुरूपसत्तिशांतिपाठादिनियमकलापसहित-साङ्गश्रवणस्यैवाज्ञाननिवर्तकत्वम् । बन्धनिवर्तकत्वं वा स्यात् । सतिचैवमन्यो-न्याश्रयोऽपि नावतरेत् । "श्रुत्वा मोक्षमवाप्नोती"त्यादिस्मृतिरप्यनुसृता स्यात् । दर्शनं तु सेतुदर्शनमिव व्यर्थीभवतु । श्रुत्यनुसारेण दर्शनस्यैवावश्यंभावे स्मृत्यनुसारेण

सेतुदर्शनस्यापि कथं नावश्यंभावः। नच वाच्यं व्याप्तिबलेनैव न श्रुतेः स्वार्थप्रच्यावनमिति। अन्योन्याश्रयात्। व्याप्तिबलेन श्रुतेः स्वार्थप्रच्यावनानर्हत्वसिद्धौ प्रतिबन्धभावेन स्मृतेरेव स्वार्थप्रच्युतौ तत्र व्यभिचाराभावाद्व्याप्तिसिद्धिः। व्याप्तिसिद्धौ च तद्बलेनैव श्रुतेः न स्वार्थप्रच्यावनमिति कथं नान्योन्याश्रयः। उक्तविधया श्रवणस्यापि ज्ञानरूपतया व्याप्तेरनुकूलत्वाच्च। किंचाज्ञानस्यैव निवर्त्यत्वे "ज्ञानमज्ञानस्यैव निवर्तक"मितिव्याप्तेरनुकूलत्वादस्तु श्रुतेः स्वार्थप्रच्यावनम्। यथाश्रुतबन्धस्यैव निवर्त्यत्वे तु स्मृताविव श्रुतावपि कथं न स्वार्थप्रच्यावनम्। एवंच प्रतिबन्द्या न कोऽपि परिहारः। अज्ञानप्रणाड्याश्च न किंचित्कल्पकम्। श्रुतेर्यथाश्रुतार्थसिद्धौ त्वत्परिकल्पितव्याप्तिबलान्मध्ये कथंचिदज्ञानं सिद्ध्येत्। स्मृतौ त्वदुक्तन्यायेन श्रुतावपि दर्शनपदस्य तत्सामग्रीपरत्वकल्पनायां तु कल्पकस्यैवापोदितत्वात् कथमज्ञानसिद्धिः। यदिचाज्ञाने परमादरात् दर्शनपदस्य न सामग्रीपरत्वकल्पनं तर्हि बन्धोपादानाविद्यायां परमद्वेषात्परोऽपि न स्मृतिस्थदर्शनपदस्य सामग्रीपरतामङ्गीकुर्यात्। त्वदुक्तानुपपत्तेः परिहृतत्वात्। व्याप्तेरत्रैव व्यभिचारेणासिद्ध्या नोभयत्रापि स्वार्थप्रच्यावनम्। अतएव सेतुदर्शनस्यैव पापनिवर्तकत्ववत्साक्षाद्ब्रह्मदर्शनस्यैव बन्धनिवर्तकत्वसंभवेन त्वदभिलपिताज्ञानासिद्धिश्च। एवंच स्मृत्युक्तं सेतुदर्शनं नराणां ब्रह्महत्यामिव त्वत्परिकल्पिताज्ञानाख्यशस्त्रेण परब्रह्महत्यामपि निवारयेदेव। अतएव "सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहती"ति सामान्यतः फलश्रवणम्। तस्माद्दुरुत्तरा प्रतिबन्दी। यच्चोक्तं (त. पु. ४३ प. २१) * नतावत्तार्क्ष्यस्मरणमात्रस्य सत्यविषशमयितृत्वम्। किंतु ध्यानमन्त्रप्रयोगादिक्रियायाः * इति तदयुक्तम्। इहापि दर्शनमात्रं न बन्धनिवर्तकम्। किंतु "नायं सुखाप्यो भगवान्देहिनां देवकीसुतः। ज्ञानिनां चात्मपोतानां यथा भक्तिमतामिह" "मयि भक्तिर्हि भूतानाममृतत्वाय कल्पते" "नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम्" "भक्त्येकलभ्यः पुरुषोत्तमो हि" "अनुबन्धादिभ्य"इत्यादिप्रमाणसिद्धभक्तिरेव बन्धनिवर्तिका। ज्ञानंतु गरुडस्मरणमिव भक्तावुपयोगीत्यापत्तेः। उक्तविधया प्रामाणिक्यस्मत्कल्पना। तेन विरुद्धा च भवत्कल्पना। यदिच स्मरणेन प्रसन्नः तार्क्ष्य एव विषं नाशयतीति मतम्। तर्हि प्रकृतेऽपि स्वदर्शनेन प्रसन्नः परमात्मैव राजेव निगडबन्धं

मोचयतीत्यस्तु । एवंच "उतामृतत्वस्येशानः" "अमृतस्यैष सेतुः" "वरं वरय भद्रं ते ऋते कैवल्यमात्मनः । एकएवेश्वरस्तस्य भगवान्विष्णुरव्ययः" "बन्धको भवपाशेन भवपाशाच्च मोचकः । कैवल्यदः परंब्रह्म विष्णुरेव न संशयः" "शङ्कराज्ज्ञानमन्विच्छेन्मोक्षमिच्छेज्जनार्दनात्" "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" इत्यादिश्रुतिस्मृतयोप्यनुकूलिताः स्युः । एवंच भक्तिद्वारा भगवद्द्वाराच ज्ञाननिवर्त्यतया श्रुतसत्यबन्धस्य निर्निमित्तं मिथ्यात्वं कल्पयतः परस्य स एव बन्धः क्रुद्धः प्रतिबन्दी बन्धात्मना गलं बध्नाति । किंचैवं स्मृतिवनितायाः पदशक्तिदूतीकृतघटनमर्थवरं वियोज्यायोग्यमर्थं जारमिव योजयतः परस्य (वि. पु. ४७ प. १०) * शिष्टाचारप्रतिपालनाय विघ्नोपशांतये च विशिष्टदेवतातत्वानुस्मरणलक्षणं मङ्गलाचरणं कृतम् * । (वि. पु. ४८ प. ११) * अन्यार्थमपि देवतानुस्मरणं स्वभावादेव विघ्नोपप्लवं धक्ष्यति * इति वक्ष्यमाणस्वमूलवचनातिक्रमदोषः कथं न मनो व्यथयेत् । एतद्वाक्येन विरुद्धं "तार्क्ष्यस्मरणमात्रस्य न विषशमयितृत्वमि"तिस्ववचनं च कथं न मनो व्यथयेत् । सत्यानामेव विघ्नानां देवतानुस्मरणेनैव निवृत्तेः स्पष्टं ततोऽवगमात् । नच विघ्नोऽविद्यैवेति वाच्यम् । (वि. पु. ४६ प. १३) * विघ्नोपसंसृष्टतया शास्त्रार्थेऽप्रतिपत्त्यन्यथाप्रतिपत्तिविप्रतिपत्तिसंभवात् * इति तत्रैव विघ्नानामप्रतिपत्त्याख्याविद्याभिन्नतया निर्णयात् । स्मरणस्य परोक्षतयाऽविद्यानिवर्तकत्वासंमतेश्च । देवतास्मरणस्य समानविषयकदेवताऽविद्यानिवर्तकत्वेऽपि शास्त्रपूर्वोत्तराप्रतिपत्त्याख्याविद्यानिवर्तकत्वायोगाच्च । तस्मादुक्तदेवतानुस्मरणं प्रतिबन्धकतया विघ्नपदवाच्यत्वेन सर्वजनसंप्रतिपन्नदुरदृष्टादिनिवर्तकमेवेति स्वप्रक्रिययैव स्वोक्तव्याप्तिभङ्गः । नचात्रापि मध्ये देवतादेरनुप्रवेशादविरोध इति वाच्यम् । दूषितत्वात् । "स्वभावादेवे"तिस्वोक्तिविरोधाच्च । यच्च (त. पु. ४३ प. २२) * नच विषयदोषदर्शनं रागनिवर्तकम् । रागविरुद्धचेतोवृत्त्युदयाद्रागनिवृत्तेः * इति तत्वदीपनम् । तत्र वक्तव्यम् । किं रागानुकूलप्राक्तनचेतोवृत्तौ सत्यामेव तद्विरुद्धचेतोवृत्त्युदयः? उत तन्नाशानन्तरम्? नाद्यः । विरुद्धवृत्तिद्वयस्य युगपदयोगात् । द्वितीये प्राचीनवृत्तिनिवर्तकं वाच्यम् । विषयदोषदर्शनंचेत् किमधिकमाचरितम् । रागानु-

कूलचेतोवृत्तेरेवाविद्याभिन्नायाः वस्तुभूतायाः ज्ञानेन निवृत्त्यङ्गीकारात् । नच वाच्यं विषयद्वेषादेव सहेतुकरागविनाशो द्वेषोदये च विषयदोषदर्शनमुपयुज्यत इति । सति स्वहेतूपोद्बलितरागे कारणशतेनापि तद्विरुद्धद्वेषोदयासंभवादनुदितस्य स्वयमसतो द्वेषस्य सुतरां रागनिवर्तकत्वासंभवाच्चिरकालीनदृढनिरूढरागोपशमः केनेति वाच्यम् । द्वेषोत्पादकसामग्र्येव विरोधिनं सहेतुकं रागं विच्छिद्य द्वेषमुत्पादयतीति चेत्तर्हि घट्टकुटीप्रभातोऽयम् । अन्यत्रालब्धसरणिना त्वयाप्यस्मदुक्तविधया विषयदोषदर्शनादेव रागनिवृत्त्यङ्गीकारात् । द्वेषोत्पादकसामग्री हि विषयदोषदर्शनम् । एतावदधिकमाचरितम् । यदज्ञानातिरिक्तैकतममपि ज्ञानानिवर्त्यं सिषाधयिषुणा तादृशद्वयं ज्ञाननिवर्त्यमापादितम् । सहेतुकरागनिवृत्त्यङ्गीकारात् । हेतुनिवृत्तिमात्रेण भाविकार्यनिवृत्तिसंभवेऽपि भूतकार्यनिवृत्तेर्ज्ञानैकसाध्यत्वात् । परोक्तेनानेन व्यभिचारेणाद्यापि व्याप्तेरेवासिद्धतया सार्वजनीनव्यवहारापवादकाभावाच्च । अतः स्वयूथ्यान्प्रति स्वगृहे कथंचिद्व्यभिचारपरिहारेऽपि सभायां परीत्याऽऽगतव्यभिचारस्य न कोऽपि परिहारः । यच्च ×श्रुतिबलात्सत्यस्य बन्धस्यैव साक्षाज्ज्ञाननिवर्त्यत्वमिति द्वितीयपक्षमसहमानेनोक्तं पञ्चपादिकायां । (पं.पु.४२प.९) * यतो ज्ञानमज्ञानस्यैव निवर्तकम् * इति । तत्रायं खलु परस्याशयः । श्रुतस्यैव कालान्तरभाविस्वर्गं प्रति साधनत्वस्य कर्मतया क्षिक्षणावस्थायिनि यागेऽनुपपत्त्या यथोपपादकमदृष्टं कल्प्यते । तथा "दृष्ट्वैव तं मुच्यते"इत्यादिना श्रुतस्यैव ज्ञाननिवर्त्यत्वस्याज्ञानभिन्ने बन्धे "ज्ञानमज्ञानस्यैव निवर्तक"मिति व्याप्तिविरोधेनानुपपत्त्योपपादकमाविद्यकत्वं कल्प्यत इति । तदेतदनुपपन्नम् । व्याप्तेरेव शतशो व्यभिचारेणोदाहरणस्थलाभावेन च दूषितत्वात् । न केवलमुदाहरणस्थलाभावः । किंतु प्रतिकूलं चेदमुदाहरणम् । अभावाभावस्य भावरूपत्वेन ज्ञानाभावनिवृत्तिर्ज्ञानरूपा हि लोके दृष्टा । भावरूपाज्ञानवादिनस्तव तु तन्निवृत्तिरन्यैव । नतु ज्ञानरूपा । अतः कथं न प्रतिकूलमुदाहरणम् । तव मते बन्धस्यानादित्वेन कथ्यमानाज्ञानोपादानकत्व-

---

×(त. पु. ४० प. २१) ज्ञानस्य वस्तुनिवर्तकत्वं किं दृष्टबलात् किंवा श्रुतिबलात् । इति तत्वदीपने आशंक्य प्रथमपक्षं पूर्वमेव निरस्य (त.पु.४०प.३६) श्रुतिबलात् ज्ञानस्य वस्तुनिवर्तकत्वमिति पक्षमुत्थापयतीत्यादिनोक्तस्यायमर्थानुवादः ।

स्यासंभवाच्च । किंच यथा व्याप्तिबलाज्ज्ञानमज्ञानस्यैव निवर्तकम् । तथा श्रुतिबलाद्बन्धस्यापि कुतो न निवर्तकम् । नह्येकमेकस्यैव निवर्तकमित्यस्ति । गेहदाहकस्यैव वह्नेर्देहदाहकत्वस्यापि दर्शनात् । ज्ञानमज्ञानस्यैव निवर्तकमिति व्याप्तिरितिचेत् । अन्यस्यापि निवर्तकत्वबोधकश्रुतिसद्भावेनावधारणायोगात् । व्याप्त्यैव श्रुतिबाध इति चेन्न । श्रुतिबाधे सिद्धे सावधारणव्याप्तिसिद्धिः । तादृशव्याप्त्यैव च श्रुतिबाध इत्यन्योन्याश्रयात् । किंच यथा गङ्गास्नाने देहमलधर्ममात्रनिवर्तकत्वग्राहिप्रत्यक्षमपोह्य श्रुतिबलात्पापनिवर्तकत्वमप्यङ्गीक्रियते । "गुणे त्वन्याय्यकल्पने"तिन्यायात् । नतु प्रत्यक्षमेवाश्रित्य निवर्त्यतया श्रौतपापानामेव घर्माद्युपादानकत्वं कल्प्यते । तथेहापि स्वकपोलकल्पितावधारणमात्रमपोह्यालौकिकनिरवकाशश्रुतिबलाज्ज्ञानेऽज्ञानभिन्नबन्धनिवर्तकत्वं व्याप्तिमूलप्रत्यक्षबलादज्ञाननिवर्तकत्वं च साक्षादेव कुतो नाङ्गीक्रियते । न्यायसाम्यात् । अपिच यागस्थले कल्प्यमानमदृष्टं न प्रमाणविरुद्धम् । किंतु "पुण्येन पुण्यं लोकं नयति" "क्षीणे पुण्ये मर्त्यलोकं विशन्ती"त्यादिश्रुतिस्मृतिसिद्धम् । इदंतु मिथ्यात्वापरपर्यायमाविद्यकत्वं "विश्वं सत्यमि"त्यादिश्रुतिविरुद्धम् । अर्थक्रियाकारित्वादियुक्तिविरुद्धं च । "सर्वं खल्विदं ब्रह्म" "नेहनानास्ति किंचन" "स आत्मातत्त्वमसी"ति चैक्यप्रतिपादकत्वेन त्वदभिमतश्रुतीनां कथंचित्सद्भावेऽपि साक्षाज्जगन्मिथ्येति मिथ्यात्वप्रतिपादकश्रुतिस्मृत्यभावेन प्रमाणासिद्धं च । "यश्चार्थादर्थादर्थो न स चोदनार्थ" इति वचनेनार्थिकार्थस्याश्रौतत्वात् । "असत्यमप्रतिष्ठन्ते जगदाहुरि"त्यादिस्मृतिविनिंदितं च । किंचैवमन्यानभिमतमज्ञानस्वरूपं परिकल्प्य तस्य ज्ञानाभावस्वरूपमुख्याज्ञानत्वाभावात्पारिभाषिकमज्ञानत्वं च कल्पयता परेण "धर्मिकल्पनातो वरं धर्मकल्पने"तिन्यायेन बन्धस्यैव पारिभाषिकमज्ञानत्वं किमिति न कल्प्यते । "येऽविद्यामुपासत"इत्यादौ त्वयैव विद्यान्यत्वेन कर्मणामविद्यात्वाङ्गीकारात् (पं. पु. ८८ प. ३) * ज्ञानपर्युदासेने * ति पञ्चपादिकायां (त.पु.८९प.१६) * "अज्ञानमिति ज्ञानपर्युदासेनोच्यत"इति ज्ञानान्यत्वे हेतुमाह "जडात्मिके"ति * इति तत्वदीपने च वक्ष्यमाणत्वेनज्ञानान्यतया हि भवदभिमतमप्यज्ञानमज्ञानशब्दवाच्यम् । एतादृशं चाज्ञानत्वं बन्धे सुतरां संभवतीत्यनुकूलैव श्रुतेर्व्याप्तिः ।

अङ्गीकृत्येदमुदितम् । वस्तुतस्त्वविरोधिन एवान्यस्य पर्युदासेन नञर्थतयाऽऽश्रयणीयत्वात् । विरोधाभावयोश्च पृथगेव नञर्थत्वात् । अन्यथाऽर्थभेदायोगात् । नहि धर्मविरुद्धे पापे घटादिसाधारणं धर्मान्यत्वमादायाधर्मपदं केनचित्प्रयुज्यते । घटेऽपि प्रयोगप्रसङ्गात् । नवा सुरविरोधिषु दैत्येषु मनुष्यादिसाधारणं सुरान्यत्वमादायासुरपदं प्रयुज्यते । मनुष्येष्वपि प्रयोगप्रसङ्गात् । किंत्वविरोधिन्यश्वान्यगोगवयादौ पशुत्वेन च तत्सदृश एव पर्युदासवृत्त्या "अनश्व"इत्यादिपदप्रयोगः । एवंच नञः पर्युदासे जडभावत्वेन जीवाश्रितत्वेन च ज्ञानसमे बन्धे सत्येवोत्पत्स्यमानज्ञानानुकूलबन्ध एवाज्ञानमिति व्याप्तिबलादपि ज्ञानं बन्धस्यैव निवर्तकं प्राप्तम् । अत आत्मीय एव बाणो भवन्तं प्रहरति । (त. पु. १२२ प. १३) * अज्ञानमित्यत्र नञः किमभावोऽर्थः । उत तद्विरोधी । आहो तदन्यः । आद्ये ग्रहणाभावः स्यात् । द्वितीये ग्रहणनिवर्त्यभ्रांतिज्ञानमेव स्यात् । तृतीये संस्कारः स्यात् * इति तत्वद्वीपने विरोधिभिन्नस्यैवान्यस्य पर्युदासार्थतया वक्ष्यमाणत्वाच्च बन्ध एव ज्ञानान्यत्वेनाज्ञानम् । तवमतेन तु साक्षाद्विरोधि भवदभिमतमज्ञानम । कथं तर्हि पञ्चपादिकेतिचेत् । पूर्वोत्तरविरुद्धत्वाच्चतुष्पादिकेतिद्रष्टव्यम् । सति संसारासङ्गे श्रवणादावप्रवृत्तिदर्शनेन वैराग्योदये प्रवृत्तिदर्शनेन च पञ्चपादिकायामविद्यापदोक्तविद्याविरोधित्वस्याप्यज्ञान इवाहंममतारूपबन्धेऽपि स्पष्टं वक्तुं शक्यत्वाच्च । गोत्वाश्वत्वयोरिव प्रबलतमविरोधाभावात् प्रागविरुद्धत्वमुक्तम् । यादृशतादृशविरोधोऽत्रोक्त इति नास्माकं पूर्वोत्तरविरोध इति ज्ञातव्यम् । अन्ते नाश्यत्वरूपविरोधस्तु श्रौतत्वाद्बन्ध एव युक्ततरः । एवंच बन्धस्यैव द्वेधाप्यज्ञानत्वेन साक्षाज्ज्ञाननिवर्त्यत्वमुपपन्नमिति श्रुतिरपि यथाश्रुतार्थेनैवार्थवती स्यात् । व्याप्तिरपि साक्षादेवानुकूलिता स्यात् । प्रागुक्तानि ज्ञानस्य त्वदभिमताज्ञानान्यनिवर्तकत्वप्रमाणान्यप्यनुसृतानि स्युः । सकलसंप्रतिपन्नजगदपलापोऽपि न स्यात् । प्रत्यक्षादिप्रमाणाप्रमर्दनेन श्रुतिः स्वात्मानञ्च न व्याहन्यात् । किमन्तर्गडुना तवाज्ञानेन । पराकौशलप्रदर्शनायैव बन्धस्याज्ञानपदवाच्यत्वमुपपादितम् । व्याप्तिमनङ्गीकुर्वतो मम बन्धस्याज्ञानपदवाच्यत्वनिर्बंधे न किंचित् कारणमित्यपि द्रष्टव्यम् । किंच यागादौ चिरकालातीतत्वेन स्वर्गसाधनत्वायोगाख्यानुपपत्तेः प्रबलत्वाददृष्टकल्पनम् । इह तु यज्ज्ञानं तदनित्यमिति

लोकसिद्धव्याप्तिमुपेक्ष्य श्रुतिबलेनैव नित्यज्ञानाङ्गीकारवन्नित्यसुखं तद्विषयजमिति व्याप्तिमुत्सृज्य नित्यसुखाङ्गीकारवद्यो गुरुकार्यकर्ता स क्लेशभागिति व्याप्तिमपहाय जगत्कर्तृनिर्दुःखेश्वरोररीकरणवद्यत्स्पर्शवत्तद्रूपवदितिव्याप्तिमुल्लङ्घ्य नीरूपस्पर्शवद्वाय्वभ्युपगमवद्यद्रूपवत्तत्स्पर्शवदितिनियममतिक्रम्य निस्स्पर्शरूपवदन्धकारोररीकारवच्च स्वसमयमात्रसिद्धामिमां व्याप्तिमेवोत्सृज्य श्रुतिबलाद्बन्धस्यैव ज्ञाननिवर्त्यत्वं कुतो नाङ्गीक्रियते । लौकिकज्ञानादिमात्रविषयिणीयं व्याप्तिरस्तु । किंचोक्तरीत्या सेतुदर्शनगरुडस्मरणादेरज्ञानान्यपापविषादिनिवर्तकत्वात्तत्रैव स्पष्टं व्यभिचरितेयं व्याप्तिः परपुरंध्री कथं श्रुतिसतीमनोव्याक्षेपायालम् । येनोपपादकमिदमन्वेषणीयम् । ×किंच तार्किकाद्यभिमतज्ञानाभावरूपाज्ञानस्य निवृत्तिरेव ज्ञानं नतु तन्निवर्तकमिति त्वयैवोपपादितं सर्वजनसिद्धं च । अन्यच्च ज्ञानं न तेषामभिमतम् । ततश्चोदाहरणस्थलाभावेन प्रशिथिलमूलेयं व्याप्तिरेव न विद्वदुदाहरणार्हा । नच; विप्रतिपन्नं प्रति त्वदभिमतमिदमज्ञानं प्रसाध्य तत्रेयं व्याप्तिरुदाह्रियत इति वाच्यम् । ज्ञाननिवर्त्यत्वान्यथानुपपत्तौ सिद्धायामुपपादकाज्ञानसिद्धिः, अज्ञानसिद्धौ च तत्र गृहीततद्व्याप्तिविरोधाज्ज्ञाननिवर्त्यत्वान्यथानुपपत्तिरित्यन्योन्याश्रयात् । न चान्यस्त्वदभिमताज्ञानसाधकमुभयवादिसंप्रतिपन्नमस्ति । येन नान्योन्याश्रयः । अस्तिचेत्तदपि ज्ञानाभावपरतया परः परिहरेदेवेति न तेन त्वदभिलषिताज्ञानसिद्धिः । तच्च वक्ष्यते। अपिच किमिदमज्ञानत्वं ज्ञानाभावत्वं वा ज्ञानविरोधित्वं वा ज्ञानान्यत्वं वा । न प्रथमः । त्वयैवानङ्गीकारात् । द्वितीयेऽपि किं स्वरूपज्ञानविरोधित्वमुत वृत्तिज्ञानविरोधित्वम् । नाद्यः । (वि. पु. ९९ प. ३) * नचाश्रयप्रतियोगिज्ञानभूतमपि साक्षिचैतन्यं भावांतरस्याज्ञानस्य निवर्तकम् । तस्याज्ञानविषयप्रतिभासत्वात् * (वि. पु. ९९ प. ५) * सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिचैतन्यस्य विषय एव । तत्र ज्ञाततया विषयः प्रमाणव्यवधानमपेक्षते । अन्यस्तु सामान्याकारेण विशेषाकारेण वाऽज्ञानव्यावर्तकतया सदा भासते * इतिवक्ष्यमाणविवरणप्रक्रियया स्वरूपज्ञानविरोधित्वस्य त्वयैवानङ्गीकारात् । विरोधे च यद्विषयकमज्ञानं तस्य विषयस्य साक्षि-

---

×(पु. ४० प. ३३) "प्रागभावनिवृत्तेर्ज्ञानमात्रत्वाभ्युपगमात् न ज्ञानेन प्रागभावस्य निवर्त्यत्वं" इति तत्वदीपनवाक्याभिहितोऽयमर्थः ।

णाऽप्यज्ञानात्कथं तदवच्छिन्नाज्ञानज्ञानमिति भावरूपाज्ञानस्याप्यभावरूपाज्ञानवदसिद्धिप्रसङ्गात् । किंच किमिदमज्ञानस्य स्वरूपज्ञानविरोधित्वं न तावत्तन्निवर्त्यत्वम् । उक्तयैव विवरणप्रक्रियया विरोधेनापसिद्धान्तापातात् । निवर्तकस्वरूपज्ञानस्यानादित्वेनाज्ञानस्यैव गर्भस्रावापाताच्च । नापि तदुत्पत्तिप्रतिबन्धकत्वं तद्विनाशकत्वं वा (वि. पु. १११ प. ४) * स्वरूपस्यानपायात् * इति वक्ष्यमाणविवरणोक्तिविरोधात् । नापि तत्कार्यप्रतिबन्धकत्वम् । (वि. पु. १११ प. ४) * ज्ञानस्य विषयावभासात्मनोदितस्य स्वकार्ये प्रतिबन्धप्रतीक्षयोरभावात् * इति वक्ष्यमाणविवरणोक्तिविरोधादेव । किंचैवं सति स्वरूपज्ञानविरोधित्वरूपाज्ञानत्वस्य स्वविरोधितन्निवर्त्यत्वमात्रसंपादकत्वेऽपि निवर्तकत्वेन त्वदभिमतस्वाविरोधिवृत्तिज्ञाननिवर्त्यत्वस्य कथं संपादकम् । नहि प्रकाशविरुद्धं तम इति घटेनापि निवर्तते । व्यधिकरणत्वात् । नापि रजतभ्रमः शुक्तिप्रमाविरोधीति पटप्रमया निवर्तते । नन्वज्ञानस्य स्वरूपज्ञानंप्रति विरोधित्वे ज्ञानत्वाविशेषाद्वृत्तिज्ञानं प्रत्यपि विरोधोऽनुक्तिसिद्ध इतिचेन्न - शुक्तिप्रमावद्घटप्रमाया अपि रजतभ्रमविरोधित्वप्रसङ्गादेव । किंचैवमपि स्वरूपज्ञानं प्रति प्रतिबन्धकत्ववद्वृत्तिं प्रत्यपि प्रतिबन्धकत्वस्यैव कथंचित्प्राप्त्या वृत्तिविनाश्यत्वस्य त्वदभिलपितस्याऽऽकस्मिकत्वप्रसङ्गात् । नह्यंधकारो घटप्रमाप्रतिबन्धक इति तत्प्रमयैव निवर्त्योऽपि दृष्टः । नापि प्रतिबन्धकं प्रतिबध्येनैव निवर्त्यम् । तथासति प्रतिबन्धकत्वस्यैवासंभवात् । किंचैवं वृत्तिनिवर्त्यमज्ञानमिति ज्ञानत्वाविशेषात्स्वरूपज्ञानेनापि कुतो न तन्निवृत्तिः । अतो यत्किंचिदेतत् । तस्माद्वृत्तिविनाश्यत्वे अज्ञानत्वं प्रयोजकं वदता प्रागपि वृत्तिं प्रत्येव कथंचिद्विरोधित्वं वक्तव्यम् । तृतीयेऽपि किं वृत्तिज्ञानेन सहानवस्थायित्वं वा विरोधः वृत्तिज्ञानोत्पत्तिप्रतिबन्धकत्वं वा वृत्तिज्ञानविनाश्यत्वं वेति विवेचनीयम् । प्रथमेऽपि देशतः सहानवस्थायित्वं वा कालतः सहानवस्थायित्वं वेति विवेचनीयम् । न प्रथमः । गोत्वेन सहैकदेशानवस्थायिनोऽप्यश्वत्वस्य गोत्वविनाश्यत्वाभावेन ज्ञानेन सहैकदेशानवस्थायित्वलक्षणाज्ञानत्वस्य ज्ञानविनाश्यत्वेऽप्रयोजकत्वात् । अन्यस्य ज्ञाने सत्यन्यस्याज्ञाननिवृत्त्यदर्शनेन ज्ञानाज्ञानयोः समानदेशयोरेव निवर्त्यनिवर्तकभावावश्यंभावाच्च । (त. पु. ९३ प. २०) * अज्ञानभ्रमसम्यग्ज्ञानानामेकाश्रयत्वं नियतं * इति

तत्वदीपने (वि. पु. १०२ प. ४) * ततश्च ज्ञानेन समानाश्रयविषयं भावरूपमज्ञानं सिद्धं * इति (वि. १०१ प. २) * स्वदेशगते * ति च विवरणे वक्ष्यमाणत्वाच्च। न द्वितीयः। एककाले सहानवस्थितयोरपि पूर्वोत्तरविद्युतोर्विनाश्यविनाशकभावादर्शनात्। सहैककालावस्थानायोगाद्वृत्तिज्ञानासमानकालीनपरममुक्तेरपि ज्ञानविनाश्यत्वापातात्। जीवन्मुक्तिदशायामप्यनुवर्तमानाज्ञानस्य तन्न स्यात्। ज्ञानोदये सति भस्मीभवतः पापपुण्यादेर्बन्धस्यैव त्वदभिमताज्ञानसमानकालीनस्य साक्षाज्ज्ञानविनाश्यत्वप्रसङ्गाच्च। न तृतीयः। ज्ञानोत्पत्तिप्रतिबन्धकस्य तमसो ज्ञानविनाश्यत्वादर्शनेन ज्ञानोत्पत्तिप्रतिबन्धकाज्ञानस्य ज्ञानान्यविनाश्यत्वावश्यंभावात्। अन्यथा प्रागुक्तान्योन्याश्रयस्यानिवार्यत्वात्। उक्तरीत्याऽविरक्तस्य ज्ञानानुदयदर्शनेन "आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा। कामरूपेण कौंतेय दुष्पूरेणानलेन च" इत्यादिगीतोक्त्या चाहंममतादिरूपबन्धस्यापि ज्ञानोत्पत्तिप्रतिबन्धकत्वेनाज्ञानतया तस्यैव साक्षाज्ज्ञाननिवर्त्यत्वसंभवाच्च। न चतुर्थः। बन्धो न ज्ञानविनाश्यः अज्ञानरूपत्वाभावात्। किंत्वज्ञानमेव। ज्ञानाज्ञानयोरेव विरोधात् इतिवदता ज्ञानविनाश्यत्वप्रयोजकतया निरूप्यमाणस्याज्ञानत्वस्य ज्ञानविनाश्यत्वरूपत्वे आत्माश्रयत्वप्रसङ्गात्। एवं सति अज्ञानमेव कुतो ज्ञानविनाश्यमित्युक्ते अज्ञानत्वादितिवदता ज्ञानविनाश्यत्वादित्येवोक्तं स्यात्। तथाच कथं नात्माश्रयः। एतादृशाज्ञानत्वस्य बन्धेऽपि वक्तुं शक्यत्वेन बन्धस्यैव साक्षाज्ज्ञानविनाश्यत्वापाताच्च। अतएव न पञ्चमः। किंच चरमवृत्तेरुत्पत्तिमत्त्वेन प्रागभावावश्यंभावात्। राजदर्शनाभावनिमित्तकनिगडबन्ध इवेश्वरदर्शनाभावनिमित्तकोऽस्तु संसारबन्धः। सचेश्वरदर्शने सति स्वनिमित्तदर्शनाभावनाशा"न्निमित्तापाये नैमित्तिकस्याप्यपाय"इति न्यायेन नश्येत्। दृश्यते हि सूर्योदयनिमित्तकस्यापि कमलदलोपादानकृतद्विभागरूपस्य कमलविकासस्य निमित्तापायेऽपायः। तथाच ज्ञाननिवर्त्यत्वस्यान्यथैवोपपत्तेर्न त्वदभिलषितभावरूपाज्ञानसिद्धिः। नच दर्शनाभावसंपादनार्थमेवैतदिति वाच्यम्। श्रवणादिरूपदर्शनसामग्र्यभावादेव तदुपपत्तेः। सोऽपि कस्मादिति चेन्न। अद्योत्पद्यमानघटसामग्र्यभावः पूर्वेद्युः कस्मात्। घटकादृष्टविलंबादिति चेत्। इहापि विषयवैराग्यादिसंपादकादृष्टविलंबादित्यस्तु। ननु दर्शनविनाश्यमज्ञानं तद्विघटकम्। कदापि सामग्र्यभाव-

प्रसङ्गात् । अस्माकं तु नित्यसाक्षिरूपसामग्रीसद्भावात्सर्वदास्वस्वरूपानन्दानुभवोऽपि स्यादिति तत्प्रतिबन्धकमावरणमावश्यकम् । प्रतिबन्धप्रकारमुपरि वक्ष्यामः । तत्र तु न स्वरूपज्ञानविरोध्यज्ञानं । विरोधिवृत्तिज्ञानाभावस्तूक्तविधयाऽन्यथोपपन्न इत्यष्टमरसायितं भावरूपाज्ञानम् । किंचास्त्वज्ञानोपादानको बन्धः । अज्ञानं च सत्यमेव स्वविरोधिज्ञानेन वायुना घर्म इव निवर्तताम् । नहि विरोधिना विरोध्यन्तरे निवर्हणीये मिथ्यात्वं तंत्रम् । प्रकाशेन तमःसमुन्मूलने क्रियमाणे तददर्शनात् । अज्ञाननाशे चोपादाननाशात्कपालनाशे घट इव सत्योपादानकत्वात्सत्य एव बन्धो नश्यतु । मिथ्यात्वे कुतोऽयं परस्य निर्बंधः । तस्मात्कफोणिगुडायितं पराभिमतं बन्धमिथ्यात्वम् । किंच देहगेहादिष्वहंममतादिरूपबन्धस्य ज्ञाननिवर्त्यत्वान्यथानुपपत्त्या मिथ्यात्वं कथंचिदाशास्यम् । महीमहीधरमहोदधिप्रभृतीनां कुतो मिथ्यात्वमङ्गीक्रियते । तेषु सत्सु ममता न विच्छिद्यत इति चेन्न । शरीरनाशे सर्वस्यापि ममताविच्छेददर्शनात् । सत्स्वपि तेष्वधिगतपरमार्थानां शुकनारदादीनां शरीरपातात्पूर्वमपि तद्विच्छेददर्शनाच्च । नह्यनर्थरूपबन्धविच्छेदार्थं ज्ञानसाधनविचारं सूत्रयता सूत्रकृताऽधिकारिविषयविचारे शास्त्रवक्तृश्रोतृप्रभृतीनामप्यत्यंताभावलक्षणं मिथ्यात्वमर्थतोऽपि सूत्रितमं । येनेयं दुरन्तचिंता कथंचित्प्रकृतोपयोगिनी स्यात् । प्रत्युताधिकार्याद्यभावशङ्कया शास्त्रानारम्भप्रसङ्गं परिजिहीर्षुरादिसूत्रेण सयुक्तिकमधिकारिविषयप्रयोजनतत्संबन्धादिसद्भावमेवासूत्रयत् । नापि संकर्षणमुखानलेन भस्मीभवतां महादीनामन्यतोऽपि ज्ञाननिवर्त्यत्वं सिद्धम् । येन प्रसङ्गसङ्गत्या वेदमुपयुज्येत । अतएव प्रतिपाद्यब्रह्माख्यविषयसत्तया सहसूचितसंबन्धादिसत्ता च पारमार्थिक्येव न व्यावयारिकी । अर्धजरतीयानुपपत्तेः । एवंचाद्वितीयत्वश्रुतयोऽपि सूत्रकृदभिमतजगत्सत्यत्वापरिघातकतया परैणैव व्याख्येयाः । नहि ज्ञानेन निवृत्तिर्बाध इति । दूषितत्वात् । तथासति नेदमज्ञानमिति कदाचिदपि प्रत्ययानुदयेन प्रत्युताहमज्ञ इत्युल्लिख्यमानाज्ञानबाधेऽहं ज्ञ इत्येव ज्ञानोदयेन च नेदं रजतं नायं सर्प इत्याद्याकारकाज्ञानबाधगर्भायाः ज्ञानमज्ञानस्यैव निवर्तकमिति त्वदुक्तव्याप्तेः कुत्राप्यदर्शनेन दत्तजलांजलित्वापातात् । नहि घटज्ञाने सति तज्ज्ञानाभावरूपमज्ञानं नेदमज्ञानमिति बाध्यते । अपितिवयंतं कालं स्थितमेवाज्ञानमिदानीं नष्टमित्येव प्रतीयते । एवंचाज्ञानबाधस्य

क्वाप्यदर्शनान्निर्मूलैव व्याप्तिः स्यात् । तदा बाधस्यैव परेण वक्तव्यत्वाच्च । अतो ज्ञानेन विनाश्यत्वमेव ज्ञाननिवर्त्यत्वं वाच्यम् । तच्च महीमहीधरादेर्न कुत्रापि श्रूयत इति व्यर्थैव तेषामज्ञानोपादानकत्वकल्पना । सेतुदर्शनादौ गत्यन्तरानुसरणप्रयासवैयर्थ्यापाताच्च न निवृत्तिर्बाधः । नहि तत्रापि पापस्य बाधः स्मृत्यर्थः । किंतु विनाश एव । नच तेषामेवात्यंतिकविलयो ब्रह्मज्ञानेनेति वाच्यम् । तत्र प्रमाणाभावात् । उक्तरीत्या संकर्षणमुखानलेन महाप्रलयप्रतिपादकप्रमाणविरोधाच्च । किंचेदानीं ध्वस्तस्य घटादेरुत्तरक्षणे स्वकारणकपालाद्यात्मना कथंचिदविनष्टस्य तन्नाशे सर्वथा नाशावश्यंभावेन चरमज्ञानविनाश्यत्वस्य कथंचिदप्यसंभवात् । एवं महादेर्दैनंदिनप्रलयादौ स्वावयवनाशक्रमेणात्यन्तविनष्टम्याऽऽपरमाणु नाशे सुतरामात्यन्तिकनाशावश्यंभावाद्ब्रह्मविचरमज्ञानदशायामीपदप्यवशेषाभावेन तस्य तात्कालिकप्रतियोगिपूर्वकत्वनियतविनाशस्यायोगादेव । किंचात्यन्तिकविलयोऽपि नेषदवशिष्टविनष्टकार्यस्यैव पुनर्लयः । उक्तरीत्याऽसंभवाल्लोके तथाव्यवहारासद्भावाच्च । किंतु जगदन्तरप्रागभावासहकृतजगन्नाश एव । सच ज्ञानाव्यवहितपूर्वक्षणवर्तिन एव पदार्थस्य स्यात्कथंचित् । प्रत्यहमवान्तरप्रलये द्विपरार्धावसानप्रलये चानादित आपरमाणु विनष्टानां घटपटमहीमहीधरादीनामनन्तानां जगतां तु न कथंचिदपि । नष्टस्य पुनर्नाशेऽनन्तजगदुन्मज्जनप्रसङ्गेनास्माकं महालाभाच्च । तेषामप्युपादानमज्ञानमिदानीमविनष्टं सत्तदानीमेव विनश्यतीति चेत् । नश्यतु किं तेन । तावताऽप्यज्ञानस्यैव ज्ञानविनाश्यत्वमागतम् । तच्चाऽऽलोके सति विरोधेन विनश्यत्तमस इव नाज्ञानोपादानकत्वरूपमिथ्यात्वापादकम् । आत्माश्रयादपसिद्धान्ताच्च । उक्तरीत्या प्रागेव निःशेषं विनष्टजगतस्तु तन्नाशप्रणाड्या परंपरयाऽपि नाशाभावेन कथं चरमज्ञानविनाश्यत्वम् । येनाज्ञानोपादानकत्वमाशाम्येतापि । कथंचैवमद्यापि ज्ञानविनाश्यत्वेनैव घटादेरज्ञानोपादानत्वमाशासतोऽज्ञानोपादाननाशेनैव ज्ञानविनाश्यत्वसंपादने नान्योन्याश्रयः । "अनाद्यनन्तं जगदेतदीदृक्" "पुनः पुनर्जायमाना पुराणी" "यथापूर्वमकल्पयत्" इत्यादिश्रुतिविरोधेन "एवमेतदनाद्यन्तं भूतसंघातकारकम् । अनादिनिधनं लोके चक्रं संपरिवर्तते" इतिस्पष्टसतात्पर्यकभारतवचनविरोधेन चास्याप्यात्यन्तिकविलयस्यैवायोगाच्च । अस्तु तर्हि साक्षाज्ज्ञाननिवर्त्यतया

श्रुतस्य वन्धस्याज्ञानोपादानकत्वकल्पनमिति चेत् । न । "जीव ईशो विशुद्धा-चित्तथा जीवेशयोर्भिदा । अविद्या तच्चितोर्योगः षडस्माकमनादय" इतिवदतस्त-वापि मतेऽविद्याचिद्योगाख्यसंसारस्याप्यनादित्वेन कल्प्यमानाज्ञानोपादानकत्वस्य त्वद्रीत्यैव वाधितत्वात् । उपलक्षणं चैतत् । तथा भिदेत्युक्तभेदस्याप्यनादित्वेना-ज्ञानोपादानकत्वायोगोऽपि द्रष्टव्यः । कथं तर्हि साक्षात्ज्ञानेन तन्निवृत्तिरिति चेत् । केह कथंता । व्याप्तिमनङ्गीकुर्वतो मम यथाश्रुतार्थेऽनुपपत्तेरेवाभावात् । व्याप्तिशरणस्य तवाप्यनादौ वन्धे कल्प्यमानाज्ञानोपादानकत्वस्याप्यसंभवान्न कथंचित् । अतस्त्व-याऽपि व्याप्तिं धिक्कृत्य श्रुतेर्यथाश्रुतार्थ एव वाच्यः । व्याप्तावेव भरश्चेद्बलवद्व्या-प्त्यनुसारेण ज्ञानादेव वन्धनाशप्रतिपादकश्रुतिवाक्यस्य वन्धसंसारादिपदानां वध्ना-ति संसरत्यनेनेत्यादिव्युत्पत्त्या साक्षात्ज्ञानविनाश्यत्वेनाभिमतत्वदज्ञानपरतामेवाङ्गी-कुरु । तस्य च विरोधादेव नश्यतोऽज्ञानानुपादानकस्य च मिथ्यात्वे कारणाभावे-नोक्तरीत्या तदनुपादानकवन्धादिजगतश्च मिथ्यात्वे कारणाभावेन साक्षात्परंपरया वा ज्ञाननिवर्त्यत्वस्याप्यभावेन श्रुतिसूत्राभ्यां मिथ्यात्वं न सङ्गमय । अनादिवन्ध-नाशश्च भगवद्भक्तेरेव भवतु । नहि तामपि तव व्याप्तिर्निरुणद्धि । संति खलु "भक्तिरेवैनं मोचयति" "मयि भक्तिर्हि लोकानाममृतत्वाय कल्पत" इत्यादिश्रुति-स्मृतयः । यदि च रूढपदं योगमात्रेणान्यत्र न नयसि । व्याप्तिं च न मुञ्चसि । अज्ञाननाशप्रणाड्यैव च वन्धस्य नाशमाशास्से । तर्हि ज्ञानेन साक्षादज्ञानमेव नश्यतु । अज्ञाननाशे सत्युपादाननाशप्रणाड्या वन्धनाशस्योक्तविधया तव मतेऽप्य-योगादावरणाज्ञानापगमे सत्याविर्भूतभगवद्भक्त्या प्रसन्नभगवत्प्रसादादेवानादि-वन्धविनाशोऽस्तु । एवमप्यज्ञाननाशप्रणाड्या वन्धनाशस्यान्यूनत्वात् । अतः कि-मनादेर्बन्धस्यासंभवदज्ञानोपादानकत्वकल्पनया । संति खलु "यस्य प्रसादात्पर-मार्तिरूपादस्मात्संसारान्मुच्यते नापरेणे" त्यादिश्रुतयः । एतेन युक्त्यन्तरेण श्रुत्यन्त-रेण वा संसारस्य वाध्यत्वरूपमिथ्यात्वसाधनं सत्यपदस्यार्थान्तरप्रथनं च परास्तम् । उक्तरीत्या सूत्रासङ्गतमिथ्यात्वप्रसङ्गस्यैव तदनुवर्तिभिरकर्तव्यत्वात् । अथ यदि ते भक्तौ भगवत्प्रसादे च न वहुमानः । तर्ह्यज्ञाननाशे सत्यपरसंवन्धिनाशादनादिरेव तच्चिद्योगाख्यसंसारोऽपि नश्यतु । एवमप्यज्ञाननाशप्रणाड्या संसारनाशस्यापरि-

त्यागात्। विवेकिनस्तु "तमेवं विद्वानमृत इह भवति नान्यःपन्था अयनाय विद्यत" इत्यादिरूपामलौकिकार्थेऽव्यतिचलवर्ती श्रुतिमेव मानयन्तो ज्ञानेनैव मोक्षं वदन्ति। "नान्यः पन्था"इतिप्रणाड्यन्तरनिषेधात्प्रागुक्तव्याप्तिमिव प्रणाड्यन्तरप्रसाधिकां प्रशिथिलमूलामिमां व्याप्तिमेवोपेक्षयन्ति। तस्मान्महदिदमकौशलं परसमयस्य। यदुक्तविधयाऽनेकधा संभवदपवर्गमार्गानुलंघ्यासंभवदर्थपरंपरामेव पुरस्कृत्य बहुतर-शास्त्रप्रणयनं नाम। "तदा विद्वान्नामरूपाद्विमुक्त"इतिश्रुतिस्तु सर्पाद्विमुक्त इतिवन्नाम-रूपात्मकपूर्वदेहवियोगमेवाह। नतु नामादेः सर्वथा मिथ्यात्वम्। विमुक्त इत्यथा-भितनाम्नस्तत्रैव श्रवणात्। "स्वेन रूपेणाभिनिष्पद्यत"इति रूपस्यापि मुक्तिप्रति-पादकश्रुत्यन्तरे श्रवणाच्च। "भूयश्चान्ते विश्वमायानिवृत्ति"रिति सकलाज्ञाननि-वृत्तिरेवोच्यते नतु जगन्निवृत्तिरिति। तस्मादयं वञ्चकः पञ्चपादिकाकारः पञ्चपा-तककारीव प्रपञ्चपञ्चत्वायैवेमां व्याप्तिमुदीरितवानिति युक्तमुत्पश्यामः। यच्च (वि.पु.४३ प. ९) * प्रतिपाद्यमर्थं बुद्धौ संगृह्य प्रागेव तदर्थमर्थान्तरकथनमुपोद्घातः * इति विवरणोक्तोपाद्घातलक्षणे पदसार्थक्यमभिहितं ×तत्त्वदीपनकारेण। तदपि चिन्त्यम्। प्रतिपाद्यमर्थं बुद्धौ निधाय प्रतिपाद्यार्थप्रतिपादकशब्दप्रयोगात्पूर्वमेव तदर्थे तदुप-योगितयाऽर्थकथनमित्युक्तेऽन्तरशब्दमन्तरेणापि प्रतिपाद्यार्थभिन्नतदुपयोग्यर्थान्तरस्य बलादागमनेनान्तरपदवैयर्थ्यमेवेति। यच्चोक्तं पञ्चपादिकायाम् (पं.पु.४८प.५) * निरस्तसमस्तोपप्लवं चैतन्यैकतानमात्मानं प्रतिपद्यमानस्य कुतो विघ्नोपप्लवसंभवः * इति। तदप्यबोधविजृंभितम्। (शा.भा.पु.४९प.१) "युष्मदस्मत्प्रत्ययगोचरयोरि" त्यत्र प्रथमप्रयुक्तयुष्मत्पदेनास्थिरक्तक्रम्यमेध्यादिभरितपरमामङ्गलदेहादिजडपदार्थस्यै-वादौ स्मरणेन मङ्गलादित्वाभावदोषस्य तदवस्थत्वात्। "अथातो ब्रह्मजिज्ञासा" "अथातो धर्मजिज्ञासा" "अथातो दैवीमीमांसा" "वृद्धिरादैच्"इत्यादावादावेव श्रुतितो मङ्गलशब्दात्मकमङ्गलाचरणस्य बहुलमुपलंभात्। "मङ्गलादीनि मङ्गलान्तानि

---

×(त. पु. ४३ प. ३०) "प्रतिपाद्यमिति। शब्दवर्णनं व्यावर्तयति अर्थमिति। प्रतिज्ञातवर्णनं व्यावर्तयितुं अर्थान्तरेति। असंबद्धवर्णनव्यावृत्त्यर्थंतदर्थमिति। इत्यादि × × × बुद्धौ संगृह्य पश्चात्प्रतिज्ञाय यद्वर्णनम् तस्योपोद्घातत्वं व्या-वर्तयितुं प्रागेवेति। शब्दप्रयोगात्प्रागेवेत्यर्थः" इत्यन्तं तत्त्वदीपनोक्तिः॥

मङ्गलमध्यानि''इति हि प्राचां वाचः । दृश्यते हि प्रथममवशकुने सति गमनादि-कार्यानारम्भः प्रेक्षावताम् । अस्मत्पदार्थस्मरणं त्वयोग्यमुखदर्शने सति सूर्यावलोकनमिव प्राचीनामङ्गलस्मरणजदोषपरिहारेणैव चरितार्थम् । प्रायश्चित्तमिव नोत्तरफल-संपादनसमर्थम् । किंचास्मत्पदार्थस्याप्यत्ययदुःखाद्यशुभशबलितामङ्गलानर्थरूपसंसा-राधारप्रत्यगात्मत्वेन तस्य च खरसूकरश्वादिनानायोनिगतस्य परमामङ्गलतया कथं तत्स्मरणमपि मङ्गलम् । यद्यप्यस्मत्पदार्थाः संति प्रशस्ता अपि, तथापि तव मते संसारितया तेऽप्यप्रशस्ता एव । कथंचित्प्रशस्तत्वेऽपि तस्यैव विशिष्य स्मरणकार-णाभावात् । प्रशस्ताप्रशस्तस्मरणमिदं सुरायुक्तक्षीरमिव कथं मङ्गलम् । सन्निहितत्वे-नाप्रशस्तस्मरणस्यैव संभावितत्वाच्च । नच वाच्यमस्मदर्थः शुद्धं ब्रह्मेति । अस्म-त्पदप्रयोगबलायातबहुत्वोपपादनायान्तःकरणाद्युपाधिभिन्नानामस्मदर्थतया सृष्टेः । (त. पु. ५० प. २२) * अस्मदर्थेऽप्यौपाधिकभेदस्य विद्यमानत्वात् त्व-मादेशौ न भवत इति द्रष्टव्यं * इतितत्वदीपने स्पष्टं निरूपितत्वात् । उपाधिविशिष्टे तस्मि-न्विशेष्यतया शुद्धमप्यस्तीति चेन्न । एवं सत्यधिष्ठानतया सर्वत्र शुद्धानुप्रवेशेन मङ्गलामङ्गलविभागस्यैवाभावप्रसङ्गात् । विशेषणांशाप्राशस्त्येन कस्यचिदमङ्गलत्वे महानर्थरूपदुःखसाधनान्तःकरणाप्राशस्त्येनास्मत्पदार्थस्याप्यमङ्गलत्वावश्यंभावात् । किंचाहमर्थो नात्मैवेति त्वन्मतरहस्यम् । (त. पु. ६५ प. २२) * अस्मच्चासौ प्रत्ययश्चेत्यस्मत्प्रत्ययोऽन्तःकरणं * इति तत्वदीपने वक्ष्यमाणत्वाच्च । तथाच कथमस्म-त्पदं शुद्धस्मारकम् । तस्माद्यत्किंचिदेतत् । यच्चोक्तं विवरणे (वि. पु. ५६ प. ४) * सवितृकिरणविततेऽपि देशे प्रदीपालोकजन्मविनाशयोः प्रागभावप्रध्वंसाभावे-तरेतराभावेषु तमोबुध्यदर्शनान्नालोकाभावमात्रं तमः * इति । तत्रवक्तव्यम् । विरो-ध्यालोकाभावसहकृतालोकप्रागभावादेरेव तमस्त्वम् । प्रकृते च सवितृकिरणरूपवि-रोध्यालोकस्यैव सत्वान्न प्रदीपप्रागभावादौ तमोबुद्धिरिति । यदत्रोक्तं तत्वदीपने (त. पु. ५६ प. ३२) * विरोध्यभावगिरा प्रागभावोक्तौ प्रध्वंसेऽनुपपत्तेः । प्रध्वं-सोक्तावितरत्रानुपपत्तेः * इत्यादि । तदसंबद्धम् । विरोध्यालोकसंसर्गाभावसह-कृतालोकसंसर्गाभावमात्रस्य तमस्त्वेन विवक्षितत्वात् । एवंचालोकप्रागभावप्रध्वंस-योरुभयोरपि संसर्गाभावत्वेनोभयत्रापि तमोबुद्धिरुचितैव । एतेन छायारूपतमसोऽपि

संग्रह इति द्रष्टव्यम् । घटदर्शनोपयोगियत्किंचिदालोकसद्भावेऽपि सौरातपादिच्छायाविरोध्यालोकाभावस्य तत्रापि सद्भावात् । यच्चात्र (त. पु. ५८ प. २३) * आलोकसंसर्गाभावस्तम इत्यत्रापि किं संसर्गप्रागभावः उत तत्प्रध्वंसः आहोस्वित् तदितरेतराभावः * इत्यादिना विकल्प्य दूषितं तत्वदीपने । तत्तु न तत्वदीपनम् । किंतु छलरूपनिग्रहोद्दीपनमेव । तथाहि संसर्गमारोप्य यो निषेधो घटादीनां स एव संसर्गाभावः । स च प्रध्वंसो वा प्रागभावो वाऽत्यन्ताभावो वा । नतु संसर्गप्रतियोगिकाभाव इति हि परप्रक्रिया । एवं सति संसर्गप्रध्वंस इत्यादि विकल्पयतः कथं न छलम् । अन्योन्याभावस्तु तादात्म्यमारोप्य निषेध इति संसर्गाभावपदेनैव व्यावर्तितः । तथाच (त. पु. ५८ प. २६) * इतरेतराभावस्येतरेतराभावानिरूपणात् * इति वक्ष्यमाणदूषणमप्यसंबद्धम् । यच्च (विं. पु. ५६ प. ५) * सर्वालोकाभावश्चेत्सर्वालोकासन्निधाने तर्हि न निवर्तेत * इति विवरणम् । तदप्यसङ्गतम् । आलोकसंसर्गाभावस्यैवांधकारतया परेण विवक्षितत्वात् । स च प्रतियोगितावच्छेदकावच्छिन्नयत्किंचित्समवधानेऽपि निवर्तत एवेत्येकैकालोकसमवधानेऽपि तत्संसर्गाभावरूपतमोनिवृत्तेरावश्यकत्वात् । यच्चोक्तं तत्वदीपने (त. पु. ५८ प. २५) * इतरेतराभावव्यतिरिक्तालोकाभावस्य व्यञ्जकत्वमाश्रीयते * इति । तदपि न युक्तम् । अत्रापि प्रागभावादिविकल्पदूषणप्रक्रियाप्रसरात् । यदि चालोकसामान्याभाव इति ब्रूपे । परोप्येवं कथं न ब्रूयात् । तथा सत्यन्योन्याभावोऽपि तस्य तमः स्यात् इति चेन्न । तथापि कथं स तमोव्यञ्जको न स्यात् । तद्व्यतिरिक्तत्वेन विशेषणान्न तस्य प्राप्तिरिति यदि तर्हि संसर्गाभावत्वेन विशेषणात्तस्यापि न प्राप्तिः । किंच सोऽपि तद्व्यतिरिक्तत्वेन कथं न विशिनष्टि । * इतरेतराभावस्येतरेतराभावानिरूपणात् * इति चेन्न । अनवस्थाभिया तदनिरूपणेऽपि स्वरूपभेदादिनेतरेतराभावस्य च भिन्नतां सोऽपि व्यवहरेदेव । न ह्यन्योन्याभावस्य सर्वसांकर्यं परोऽपि ब्रूते । किंचैवमप्यालोकसहकृतचक्षुर्ग्राह्यघटादिग्रहणानुकूले छायारूपे तमसि त्वदुक्तालोकसामान्याभावरूपव्यञ्जकाभावात्कथं तदुपलंभः स्यात् । अत एव हि प्रौढप्रकाशकयावत्तेजःसंसर्गाभावस्तम इति प्रेक्षावन्तो वदन्ति । अस्माभिरप्यन्यथैव निरुक्तम् । नचैवं छायारूपांधकाराविरोध्यालोकवदज्ञानाविरोधि-

ज्ञानमपि स्यादिति परेण संतोष्टव्यम् । छायानिविष्टालोकस्य गाढतमोविरुद्धत्वेन छायायाश्च सौरातपरूपप्रचुरालोकविरुद्धतया प्रकाशाविरोधितमसः शशविषाणप्रायत्वात् । एतेन यत्पञ्चपादिकायां (पं. पु. ५३ प. ३) * मन्दप्रदीपे वेश्मन्यस्पष्टं रूपदर्शनमितरत्र च स्पष्टम् । तेन ज्ञायते मन्दप्रदीपे वेश्मनि तमसोऽपीषदनुवृत्तिः * इत्यादिना तमःप्रकाशयोः सर्वजनसिद्धसहानवस्थानादिविरोधमनङ्गीकृत्योच्यते । (पं. पु. ५३ प. ५) * परस्परानात्मतालक्षणो विरोधः * इति समाधानम् । तदपि निरस्तम् । स्वविरोधिगाढतमसा मन्दप्रदीपालोकस्य महाप्रकाशेन च तत्रत्यतमसः सहानवस्थानस्य वध्यघातकभावस्य च तत्रापि सद्भावात् । नच तेनाप्यविरोध एवेति वाच्यम् । तथा सति मन्दप्रदीपे वेश्मनि गाढं तमः कुतो नास्ति महाप्रकाशो वा कुतो नेति छायायां सौरातपः कस्मान्नास्ति निबिडं तमो वा कुतो नेति च प्रश्नस्य निरुत्तरत्वापातात् । इयांस्तु विशेषः । सौरातपमहातमसोर्हि द्वयोरपि प्रचुरतया क्रमेण तमोमात्रप्रकाशमात्रविरोधित्वम् । अनयोस्तु स्वयमल्पयोः किंचिन्मात्रविरोधित्वमिति लाघावात्तमोविरोधित्वादिमात्रेणैव प्रकाशत्वादिसंभवाच्च । अत एव हि तेनापि "मन्दप्रदीपे वेश्मनी" त्युक्तम् । ततो हि प्रकाशाल्पता किंचित्तमो महाप्रकाशाभावो निबिडान्धकाराभावश्च सूच्यते । उद्यद्दिनकरतेजसा तमसो विनाशदर्शनाच्च । मेरोरपरभागगमनमेव न विनाश इति चेन्न । तथापि सहानवस्थानस्य भवद्वचसैव लाभात् । प्रचुरतरतरणिकिरणप्रद्योतितबहिर्भागगुहागृहान्तर्वर्तितमसो महाप्रदीपानयने सति विनाशस्यैव दर्शनाच्च । अवश्यं चैतदेवम् । सहानवस्थानेन वा वध्यघातकभावेन वा तमःप्रकाशयोर्विरोध इति । अन्यथाऽन्धकारविनाशार्थं प्रदीपानयनस्य तत्संपत्त्यर्थं प्रदीपविनाशस्य च प्रेक्षावद्भिः क्रियमाणस्य भ्रममूलत्वापातात् । (शा. भा. पु. ४९ प. १) * तमःप्रकाशवद्विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ सिद्धायां * इति त्वद्भाष्योक्तहेतुहेतुमद्भावासंभवेन तदसम्मतत्वाच्च । परस्परानात्मतालक्षणतादात्म्याभावस्य विरोधत्वकथनं त्वश्रुतपूर्वम् । तथा सति दम्पत्योर्गुरुशिष्ययोः पितृपुत्रयोरपि विरोधित्वेन गणनाप्रसङ्गात् । अत एव हि तमःप्रदीपयोश्च विनाश्यविनाशकभावमभिप्रेत्य "अहमज्ञानजन्तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वते"त्यादिप्रमाणवचनानि । तस्मादबाधितनीलरूपगमनक्रियादि-

मत्त्वनैव तमसो भावत्वमितीयं तु चर्चा वृथा चर्चैव। यच्चोक्तं विवरणे। (वि. पु. ५९ प. ८) * अधिष्ठानसामान्यांशस्याध्यस्यमानविशेषांशस्य च क्वचित्सामान्यविशेषभावेन वा गुणगुणिभावेन वा समानाधिकृतस्यान्यतरान्यतरांशवतः पदार्थस्य दर्शनादन्यतरांशाध्यासो विभ्रमो दृष्टः। तद्वदिहाधिष्ठानस्य चितोऽध्यस्यमानस्य चानात्मनो नास्तीत्याह * इति। तदपि न। रजतादिभ्रमेष्विदन्तारूपसामान्यधर्मानुप्रवेशादस्तु तस्यासत्यस्थले सामान्यविशेषभावादिना समानाधिकृतत्वोपलंभावश्यंभावः। इह तु देहात्मनिष्ठमनुष्यत्वाहंत्वरूपविरुद्धासाधारणधर्मपुरस्कारेणैव मनुष्योऽहमित्यादिभ्रमस्य वक्तव्यतया सामान्यधर्मानुप्रवेशाभावेन भ्रमत्वस्यैवासंभवात् किमर्थमियं दुरंतचिंता। नहि शुक्ती रजतमिति कस्यापि भ्रमो दृष्टः। तर्हि विरुद्धासाधारणधर्मपुरस्कारी कथमयं भ्रम इतिचेन्मास्तु तर्हीयं भ्रांतिः मम देह इति भेदप्रतीतेर्जागरूकत्वात्। तर्ह्यहं मनुष्य इत्याद्यभेदव्यवहारस्य का गतिरिति चेत्। न। सिंहत्वदेवदत्तत्वरूपविरुद्धासाधारणाकारानवगाही सिंहो देवदत्त इत्यौपचारिकाभेदव्यवहार इव देहादिष्वभिमानविशेषादात्मनीव स्नेहाख्यगुणयोगेनौपचारिकात्माभेदव्यवहारोऽयमिति वस्तुस्थितेरेव गतेः सत्त्वात्। दृश्यन्ते ह्यभिमानविशेषात्स्वपुत्रादिद्रोहं स्वद्रोहत्वेनैव व्यवहरन्तः सन्तः। "मम प्राणा हि पाण्डवा"इति स्मृतिः। न हिपशुपक्ष्यादयोऽपि जातमात्राः प्राचीनशरीरानुभूतेष्टसाधनतां स्तन्यपानादेः स्मरन्तोऽतीततच्छरीरतयेदानींवर्तमानशरीरतया वा सर्वदा वर्तमानमात्मानं प्रतियन्तीति वक्तुं युक्तम्। त्वयाऽपि हि युष्मदस्मत्प्रत्ययगोचरयोरित्यत्र (त. पु. ५० प. २२) * पराग्रूपोऽहंकारो युष्मदर्थः। प्रत्यक्चैतन्यमस्मदर्थ इति स्वभावतो विरोधो दर्शितः। प्रतीतिरूपः प्रत्यक्, प्रतीतिविषय इतर इति प्रतीतितो विरोधः। अहंकारादिप्रविलापनेनाहं ब्रह्मेति व्यवह्रियते प्रत्यक्। अद्वैतानन्दप्रच्छादनेन कर्त्रादिरूपेण व्यवह्रियत इतर इति व्यवहारतो विरोधः * इति तत्त्वदीपने स्वभावप्रतीतिव्यवहारादिना विरोध एव तयोर्वर्णितः। तथाच सर्वलोकसिद्धविरुद्धाकारयोः कथमयं तमःप्रकाशयोरिव तादात्म्यविभ्रमः। यच्चोक्तं तत्त्वदीपने (त. पु. ६० प. २२) * हेत्वसिद्धिं निरस्यति "चेत्थं ही"ति * इति। तदप्ययुक्तं। (पं. पु. ५९ प. २) * स्वतस्तावद्विषयिणः चिदेकरसत्वान्न युष्मदंशसंभवः * इति हि पञ्चपादिका। तस्यार्थः। आत्मा न

स्वतोऽनात्मांशवान् चिदेकरसत्वादिति । तत्र चिदेकरसत्वादिति हेतोरसिद्धिमाशङ्क्य परिहरतीति खलु परस्याकूतम् । परिहारश्च (वि. पु. ६० प. ३) * चेत्यं हि जडं चैतन्यस्य कर्मकारकतयाऽवभासते । तत्कथमेकस्यां क्रियायां कर्तुर्विपरीतस्थानगतं कर्मकारकमात्मा स्यात् * इति विवरणोक्तमार्गेण । अनेनात्मनश्चिदेकरसत्वरूपहेतुसिद्धयै कदाप्यनात्मांशवत्त्वाभावो हि समर्थ्यते । तथाच हेतुसिद्धेः पूर्वमेवात्मनोऽनात्मांशवत्त्वाभावाख्यसाध्यस्यापि सिद्धेः पुनस्तस्य (त.पु.५९प.३०) * विषयिणः सकाशान्न (युष्मदंशस्य) संभवः * इत्यत्र साधनायोगात् । एवं च हेत्वसिद्धिं परिहरतः साध्यासिद्धिरपरिहार्यैव । सिद्धस्य साध्यत्वायोगात् । आत्मनोऽनात्मांशविकलत्वरूपसाध्यसिद्धितः पूर्वं चिदेकरसत्वहेतोर्दुर्बोधत्वादेव । यच्चोक्तं विवरणे । (वि. पु. ६७ प. १७) * "अपृथक्त्वेऽपि चैतन्यात्पृथगिवावभासंत"इति । अन्तःकरणवृत्त्युपाधौ नानेवावभासंत इत्यर्थः * इति । तदपि न युक्तम् । तथाहि । किमनेन (पं पु. ६७ प. १३) * आनन्दो विषयानुभवो नित्यत्वमिति संति धर्माः । अपृथक्त्वेऽपि चैतन्यात्पृथगिवावभासंते * इति पञ्चपादिकोक्तस्वरूपसुखादेरेव धर्मधर्मिभावादिकमुपपाद्यते उत वाह्यसुखस्य । नाद्यः । अन्तःकरणवृत्तौ हि तदुपादानकसुखस्य नानात्वेन भानेऽपि स्वरूपसुखस्यातःकरणाद्युपाधिभिराच्छन्नस्यान्तःकरणविलयकालीनसुषुप्तिमोक्षयोः केवलमवभासनार्हस्यान्तःकरणवृत्त्युपाधौ भानस्यैवाभावेन नानात्वेन भानस्य दूरापास्तत्वात् । नहि भवति जपाकुसुमं स्वाच्छन्नस्फटिकश्चेतिमादावुपाधिः । न द्वितीयः । "उपाधाविवे"ति च पदद्वयवैय्यर्थ्यापातात् । अन्तःकरणे स्वपरिणामरूपसुखस्य स्वत एव सत्त्वात् । नानाविषयानुभवजन्यतन्नानात्वप्रतीतेरप्यभ्रांतित्वाच्च । "अपृथक्त्वेऽपि चैतन्यादि"ति पञ्चपादिकोक्तस्वरूपसुखादिधर्मधर्मिभावनानात्वादेरसमर्थनापाताच्च । नहि वाह्यसुखस्य चैतन्यादपृथक्त्वम् । नच वाच्यं निर्विशेषचैतन्यैकरसस्वरूपसुखादेर्धर्मधर्मिभावस्य सर्वथा वाधितत्वात् वाधितार्थमिव दृश्यमानं मूलवचनं कथंचिद्योजनीयमिति । तथासति (पं. पु. ६७ प. १२) * विषयिणश्चिदेकरसस्य कुतो धर्माः । ये विषयेऽध्यस्येरान् * इति प्रश्नस्य निरुत्तरत्वापातात् । तस्य "ह्यानन्दो विषयानुभव"इत्यादिवाक्यमुत्तरम् । इदं च वाधितार्थं चेन् कथं न प्रश्नस्य

निरुत्तरता । न ह्यन्तःकरणस्य सधर्मत्वेन स्वरूपस्यापि सधर्मता । महिष्याः सक्षीरतया महिषस्यापि सक्षीरत्वादर्शनात् । (शा. भा. पु. ७६ प. १) * अन्योऽन्यस्मिन्नन्योऽन्यात्मकतामन्योऽन्यधर्मांश्चाध्यस्य * इति भाष्यस्यानिर्वाहापातात् । विवरणोक्तविधया "घ्यपृथक्त्वेऽपि चैतन्यात्पृथगिवावभासत" इति पञ्चपादिकायाः कथंचिदप्ययोजितत्वापाताच्च । किंचैवं वदतांऽतःकरणविकारसुखस्यैव नानात्वेन भांन धर्मधर्मिभावश्चोक्तः स्यान्न स्वरूपसुखादेरिति नास्मन्मतसाधारण्यम् । स्वरूपसुखविषयत्वेऽ"प्युपाधौ नानेवे"ति च वदता धर्मधर्मिभावस्यौपाधिकत्वाङ्गीकारात् । तत्प्रतीतेर्भ्रान्तित्वोररीकरणाच्च । कथमन्यथा सत्यज्ञानादिपदानां ब्रह्मस्वरूपमात्रलक्षणाङ्गीकारः परस्य । अस्माभिस्तु स्वरूपसुखाद्यनन्तधर्माणामेव प्रमितिविषयनिरुपाधिकधर्मधर्मिभाववत्वाङ्गीकारात् स्वाभाविकतन्नानाविधत्वस्याप्यभ्रमविषयत्वाङ्गीकाराच्च । अत एवास्माकं परमार्थसत्यानन्तगुणसिद्धिः । ननु स्वगतभेदवर्जिते कथमिदं सर्वं संजाघटीतीति चेत् । किं तर्हि "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" "मय्यनन्तगुणेऽनंते गुणतोऽनन्तविग्रहे" । इत्यादि श्रुतिस्मृतिरूपनिर्बाधप्रमाणप्रसिद्धमपि प्रमेयं घटकाभावमात्रात्त्याज्यम् । तथासति तथाविधप्रमाणसिद्धांकुरादिदर्शनेनादृष्टतद्धटकेश्वरस्याप्यकल्पनीयत्वापाताच्च । न हि बहुजनकर्णकुहरावतीर्णा नभोवाणी वक्तृशरीररूपघटकाभावात्त्यज्यते । अपित्वशरीरिणीत्येवाङ्गीक्रियते । तत्राप्यलौकिकं शरीरादिकं घटकमङ्गीक्रियते चेत् । का तर्हि "शुश्राव वाणी विशदाऽशरीरिणी"त्यादिस्मृतेर्गतिः । लौकिकशरीराभावमात्रपरा सा चेत्तर्हि "अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स श्रुणोत्यकर्णः" "अशरीरं वाव संतं न प्रियाप्रिये स्पृशत"इत्यादि श्रुतेर्लौकिकपाणिपादाद्यभावमात्रपरत्वसंभवेनालौकिकाप्राकृतपाणिपादचक्षुःकर्णशरीरादेः श्रुत्यंतरसिद्धस्य तावद्दत्तोऽवकाशः । ममापि भेदहीनेऽपि भेदकार्यकार्यलौकिकपदार्थविशेषाङ्गीकारसंभवाच्च । कोऽसौ घटकः पदार्थं इति चेत् । तर्हि क्षीरेरसवैषम्यवद्विविच्य वक्तुमशक्यम् । वस्तुतस्तु नहीश्वराघटितघटकसामर्थ्यविशेषा विविच्य वक्तुं शक्यन्ते । नापि विचित्रतद्रचनाचातुर्यपरिनिर्मितकार्यनिष्ठास्तत्तत्स्वभावविशेषा वा विविच्य वक्तुं शक्यन्ते । यच्चोक्तं विवरणे (वि. पु. ८४ प. ११) * भोक्तृत्वा-

ध्यासः कर्तृत्वाध्यासमपेक्षते । अकर्तुर्भोगाभावात् * इति । तदपि चिंत्यम् । अकर्तुर्भोगाभावाद्भोक्तृत्वे कर्तृत्वापेक्षायामपि भोक्तृत्वाध्यासे कर्तृत्वाध्यासापेक्षायां कथमयं हेतुः स्यात् । प्रत्युत भोक्तृत्वकर्तृत्वाभाव एव हि तत्तदध्यासोपयोगी । नहि वंशोरगभ्रमे भुजगीप्रसूतत्वं तद्भ्रमो वाऽपेक्ष्यत इति । यच्चोक्तं विवरणे । (पु. ८७ प. ५) * एकोऽप्यध्यासोऽन्योन्या त्मतासत्यानृते अहमिदं ममेदमितिच विशेषण-भेदाद्विशिष्टः परोपाधौ भिद्यते । विशिष्टार्थप्रत्ययाश्च क्रमेण वर्त्तुर्भवतीति प्रतिपत्तितः पूर्वापरीभावं विशेषणभेदाच्च विशिष्टक्रियाभेदं चाङ्गीकृत्य क्त्वा-प्रत्यय * इति । तदप्ययुक्तम् । अन्योन्यपदेन सत्यानृतपदाभ्यां च (शा. भा॰ पु. ८२ प. २) "लोकव्यवहार"इत्यत्र ×लोकोऽहमिति व्यवहारोऽध्यास इति च व्याख्याततयाऽत्मानात्मनोरेव ग्रहणात् । विशेषणप्रतिपादकशब्दभेदेऽपि विशेषण-रूपार्थभेदाभावेन विशिष्टाध्यासरूपक्रियाभेदायोगात् । नहि करीरवान् कलशवान् घटवानित्युक्ते विशिष्टभेदोऽस्ति । उक्तविधया त्रिप्रकारकोक्त्या पि मनुष्योऽहं मनुष्योऽहं मनुष्योऽहमित्यध्यास इवैकप्रकारक एव भ्रमः संगृह्यते नतु विरुद्धतत्तत्प्रकारक इति कथं विशेषणभेदस्तद्विशिष्टाध्यासरूपक्रियाभेदो वा । नह्यन्योन्यः सत्यमनृतमिति तादा-त्म्याध्यासो भवितुमर्हति । येन विशेषणभेदः स्यात् । तत्तत्पदप्रयोगश्रवणाधीनतत्त-त्पदशक्यार्थप्रतिपत्तेः पौर्वापर्येऽपि अध्यस्य मिथुनीकृत्येत्यत्राध्यसनरूपधात्वर्थाख्य-वाक्यार्थे प्रयुक्तक्त्वाप्रत्ययस्य स्नात्वा भुक्त्वा गमनमितिवत्तद्भेदपौर्वापर्ययोरभावेऽ युक्ततायास्तदवस्थत्वात् । नह्यन्धः परचक्षुषा चक्षुष्मान्भवति । इतरथा नगरीं गत्वा पुरीं प्राप्य पट्टणप्राप्तिरिति वा दण्डिनं नमस्कृत्य न्यासिनं नत्वा मुण्डिनो नमन-मिति वा प्रयोगप्रसङ्गात् । शब्दवैचित्र्येऽप्यर्थभेदाभावान्न पौर्वापर्यमिति तु तवापि समम् । यच्च (वि. पु. ८९ प. २) * तस्मिन्सत्यध्यासस्योदयादसति चानुद-यात् * इत्यध्यासोपादानमज्ञानमित्युक्तं विवरणे । तत्र वक्तव्यम् । किं शुक्त्यज्ञान-

---

×(पं. पु. ८५ प. ३) * लोक इति मनुष्योऽहमित्यभिमन्यमानः प्राणि-निकाय उच्यते ।........लोक इतिः यवहारो लोकव्यवहारः । मनुष्योऽहमि-त्यभिमान * इत्यर्थः (वि. पु. ८४ प. १३) * "लोकव्यवहारशब्दोऽध्यासा-भिधायी" * ति पञ्चपादिकाविवरणव्याख्यानामर्थानुवादोऽयम् ।

स्यैतावन्वयव्यतिरेकौ उत तदवच्छिन्नचैतन्याज्ञानस्य । नाद्यः । ×अनात्मन्यज्ञानस्य अविद्योपादानकत्वे च रजतस्य तत्प्रतिबन्धकत्वस्य च त्वयैवानङ्गीकारात् । (प.पु.१०६ प.२) * सा च न जडेषु वस्तुषु तत्स्वरूपावभासं प्रतिबध्नाति * इति हि पञ्चपादिका । न द्वितीयः । तादृशचैतन्यतदज्ञानयोरेवाननुभवेन तन्निष्ठान्वयव्यतिरेकयोः सुतरामननुभवात् । नह्येतावंतं कालं चैतन्यं नाज्ञासिषमिति कोऽपि प्रत्येति । अपितु शुक्तिकां नाज्ञासिषमिति हि सर्वस्याप्यनुभवः । नचायमेव तदनुभव इति वाच्यम् । घटोऽयमित्यनुभवस्यापि तद्गतगुरुत्वानुभवत्वप्रसङ्गात् । किंचैतौ ज्ञानाभावविषयावन्वयव्यतिरेकौ उत भावरूपाज्ञानविषयौ । नाद्यः । तवासंप्रतिपत्तेः । न द्वितीयः । ममासंप्रतिपत्तेः । अपिच किं ज्ञानाध्यासस्याज्ञानमुपादानमुतार्थाध्यासस्य । नाद्यः । तस्य भवन्मते नित्यसाक्षिरूपतयोपादाननिरपेक्षत्वात् । नच वाच्यमन्तःकरणवृत्तिरेव भ्रांतिरिति । (वि. पु. ९.१ प. ३) * अन्तःकरणस्य चेन्द्रियसंयोगादिसापेक्षत्वात् । मिथ्यार्थे च प्रत्ययमात्रपरिवर्तिनि तदयोगात् * इति विवरण एव दूषितत्वात् । न द्वितीयः । अर्थस्य कालत्रयेऽप्यविद्यमानतया शशशृंगस्येवोपादानानपेक्षत्वात् । सार्वजनीनसजातीयरजताभावाख्यमुख्योपादानं धिकृत्य रजतावभासं जनयतो दोषस्य त्वन्मात्रकल्पितविजातीयोपादानधिकरणं कैमुत्येनैव स्यात् । विशेषदर्शनाभावरूपाज्ञानस्यान्वयव्यतिरेकौ तु संशय इव रजतभ्रमेणान्यथासिद्धौ । अविद्योपादानकजगत इव प्रतिभासात्पूर्वमपि सत्त्वप्रसङ्गात् । अविद्यामात्रोपादानकतमस इवेदानीं स्वरूपबाधायोगाच्च । उपादानाविद्याया रजतप्रतिभासात्पूर्वमपि विद्यमानत्वादिदानीमबाध्यत्वाच्च । नहि मृदो घटात्मना परिणामे प्रतिभासस्योपयोगो दृष्टः । एतेनोपादानाज्ञाननाशाद्रजतनाश इत्यपि परास्तम् । चाक्षुषवृत्त्याऽपरोक्षीक्रियमाणस्य तमसः स्वावच्छिन्नचैतन्याज्ञाननाशेऽप्यनाशात् । ‡प्रतिभासमात्रशरीरं तदिति वदताऽविद्यमानस्य तस्य दोषवशात्प्रतिभास एवास्ति केवलं नत्वर्थ

×(त. पु. १०६ प. २३) * "अज्ञानात्मकं यत्स्वरूपमनात्मवस्तु तस्यावभासमविद्या न प्रतिबध्नाति" * इति तत्वदीपनमनुसन्धायेदमुदितम् ।

‡अतः प्रत्ययमात्र परिवर्तिनीत्युक्तविवरणवाक्यास्याभिप्रायप्रकटनमिदं । अतएव तत्वदीपने प्रतिभासमात्रशरीरस्येत्युक्तम् ।

इति वक्तव्यम् । अन्यथा सुखादिज्ञानस्येव तज्ज्ञानस्य भ्रमत्वायोगात् । पूर्वोत्तरकालयोरविद्यमानत्वस्य ज्ञातैकसति सुखेऽपि साम्यात् । प्रतिभासदशायामप्यविद्यमानत्वेनैव रजतस्य तत्प्रतीतेर्भ्रमत्वं वाच्यम् । तथाच कुतस्तस्योपादानापेक्षा । नच (वि. पु. ९४ प. २) * आत्माश्रयाज्ञानस्य शुक्तिकासंसर्गो विभ्रमः * इति वाच्यम् । तथापि रजतभ्रांतेरनिर्वाहात् । अज्ञानोपादानकस्य रजतस्यापि तथैव भ्रमविषयत्वमिति चेन्न । एवं तर्हि जीर्णतार्किकवत्संसर्गमात्रं मिथ्याभूतमिति स्यात् । न शुक्तिकासमानयोगक्षेमं रजतमिति कुतस्तस्य मिथ्याभूतोपादानचिंता । कस्य वा जगन्मिथ्यात्वे दृष्टान्तत्वम् । नचैवं निरुपादानतया शशशृङ्गप्रायत्वे कथमपरोक्षतः प्रतीतिरिति वाच्यम् । विकल्पासहत्वात् । तथाहि । किमपरोक्षतः प्रमा कथमिति प्रश्नार्थः उत भ्रमः कथमिति । नाद्योऽप्रसक्तेरेव । न द्वितीयः । भ्रमत्वस्यार्थाविद्यमानताप्रयुक्तत्वेन यावद्यावदर्थाविद्यमानता तावत्तावद्भ्रमत्वस्यैव भ्रौव्यात् । ननु प्रत्यक्षस्य सन्निकृष्टमात्रविषयत्वात् सर्वथाऽविद्यमानस्य सन्निकर्षायोग्यत्वात् कथं तदापरोक्ष्यमिति चेत् । एवं तर्हि शब्दस्यापि घटशब्देन पटरूपार्थस्याप्रतीत्या स्वसंबद्धार्थमात्रज्ञानजनकत्वनियमात् सर्वथाऽविद्यमानस्य च संबन्धायोग्यत्वात्पारोक्ष्यमपि कथम् । नच तदपि नापेक्षितमिति वाच्यम् । "अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि" इति तस्य त्वयाऽप्यङ्गीकारात् । असतोऽज्ञानेऽसद्वैलक्षण्यज्ञानायोगाच्च । यदिचायोग्यतारूपदोषदूषितपदद्वयसमाजवशादसंबद्धस्याप्यसतः परोक्षप्रतीतिः । त र्हीहापि रजतसादृश्यकाचादिरूपदोषदूषितार्थेन्द्रियसमागमवशादसन्निकृष्टस्यैव रजतस्यापरोक्ष्यमस्तु । परोक्षप्रमामात्रापेक्षितसंबन्धविशेषस्य तद्भ्रमस्थले परित्यागवदपरोक्षप्रमामात्रापेक्षितसन्निकर्षस्य तद्भ्रमस्थले कुतो न परित्यागः क्रियते । चक्षुषा रजतं पश्यामीत्यबाधितानुभवस्य सर्वकल्पनामूलस्य सत्त्वात् । नचैवमसन्निकृष्टत्वाविशेषाद्रजतभ्रम इव घटभ्रमोऽपि कुतो नेति वाच्यम् । घटसादृश्यरूपदोषस्य पुरोवर्तिन्यभावात् । सति तु तस्मिन् सोऽपि भ्रमः स्यादेव । नहि दूरस्थितपृथुबुध्नोदराकारशिलायां घटभ्रमो नास्तीत्यस्ति । किंच सर्वत्र चक्षुषः आलोकसहकारेणैवार्थग्राहित्वनियमेऽपि तमसि विरुद्धतत्सहकारापेक्षायां तमस एवाभावापातेन तत्प्र-

तीतेः प्रमात्वभङ्गप्रसङ्गाद्यथा स नियमस्त्यज्यते तथा चाक्षुषप्रमामात्रे प्रमीयमानार्थ-सन्निकर्षापेक्षायामपि भ्रमस्थले सन्निकर्षापेक्षायां सन्निकर्षोपयोगितयाऽर्थस्यापि तत्र सत्त्वावश्यंभावेनार्थाभावप्रयुक्तभ्रमत्वस्यैव भङ्गप्रसङ्गात्तदपेक्षा त्यज्यताम् । अति प्रसङ्गदोषं तु मल्लो मल्लान्तरमिव दोष एव निराकुर्यात् । अपिच सत्यस्थले रजत-त्वप्रकारकप्रतीतियोग्यपुरोवर्तिसन्निकर्षमात्रेण रजततादात्म्यप्रमादर्शनादिहापि रजत-त्वप्रकारकप्रतीतियोग्यः पुरोवर्ती स्वसन्निकर्षमात्रेण स्वयमेव रजतात्मना प्रतीयताम्। रजतत्वप्रतीतियोग्यता च फलबलोन्नेया रजतत्वरजतसादृश्ययोरन्यतरेणावच्छि-द्यताम् । किमतिरिक्तरजतसन्निकर्षेण । तत्रातिरिक्तरजतस्याभावात्तदनपेक्षा चेत् । इहातिरिक्तरजतस्य कालत्रयेऽप्यभावादस्तु तदनपेक्षा । तादात्म्यप्रतीतौ पुरोवर्ति-सन्निकर्षस्यैव लाघवेन प्रमास्थले प्रयोजकत्वक्लृप्तेर्विशेषणरजतरजतत्वयोस्तत्रैव सत्त्वम् तदिंद्रियसन्निकर्षौ वा घटाभावप्रत्यक्षे प्रमात्वभङ्गप्रसङ्गेन तदवच्छेदकघटसत्त्वतदिं-द्रियसन्निकर्षाविव भ्रमत्वस्यैव भङ्गप्रसङ्गान्नाङ्गीक्रियेते । ×अन्यत्र क्लृप्तिस्त्वस्ति दण्डी कुण्डलीत्यादौ क्लृप्तिरिवान्यत्रैव क्लृप्तिः । अथवा सत्यरजतस्थले रजतज्ञानविशेष्य-पुरोवर्तिसन्निकर्षमात्रेणैव रजततादात्म्यापरोक्षदर्शनादिहापि रजतज्ञानविशेष्यपुरो-वर्तिसन्निकर्षमात्रेणैव रजततादात्म्यापरोक्ष्यमस्तु । किमतिरिक्तरजतसन्निकर्षेण । मन्मते रजतत्वस्यापि रजताभिन्नतया तत्संसर्गापरोक्ष्येऽपि नातिरिक्तसन्निकर्षापेक्षा सर्वत्र पुरोवर्तिनोऽपि वस्तुगत्या रजतात्मकत्वादिकं तु भ्रमत्वप्रमात्वरूपकार्यवैचि-त्र्यान्नाङ्गीक्रियते । कारणवैचित्र्यादेव हि कार्यवैचित्र्यम् । अन्यथाख्यातिमते ज्ञानप्रत्यासत्तिसद्भावेऽपि घटत्ववति पुरोवर्तिनि ज्ञातत्वमात्रेण पटत्वविशिष्टप्रमोद-यादर्शनेन प्रमामात्रे विशेषणसद्भावस्याप्यावश्यकत्वात् । वस्तुगत्या रजताभाववति विशिष्टज्ञानासंभवदोषः कंटकेन कंटकमिव दोषेणैव परिहरणीयः । नन्वेवंसत्यंत्यंता-सच्छशशृङ्गमप्यपरोक्षतः प्रतीयेतेति चेत् । प्रतीयतां का नो हानिः । नह्यविदित-शशशृङ्गाभावः पुरुषो दूरादूर्ध्वीकृतकर्णं शशं प्रदृश्य शृङ्गितया न भ्राम्यतीत्यस्ति । प्रतीतिदशापन्नं शशशृङ्गमप्यस्माकं प्रातिभासिकमेव नात्यन्तासदिति चेत् । तर्हि

---

×पुरोवर्तिसन्निकर्षमात्रस्य कारणत्वेऽन्यत्र विशेषणसत्त्वादेः क्लृप्तिः किंनि-मित्तेत्यत इदमुदितम् "अन्यत्रेति"

महदिदमाश्चर्यम् । यदप्रतीतिदशायामत्यन्तासत्त्वेन तस्याप्यभिमतं शशशृङ्गं प्रतीतौ सत्यामकस्माच्चद्विरुद्धं प्रातिभासिकं ज्ञायत इति । तथा सत्यन्धकारस्थो घटः प्रदीपसान्निध्ये सति चक्षुषा गृह्यमाणः पटः कस्मान्न ज्ञायते । असतोऽपरोक्षप्रतीत्ययोग्यत्वात्तथाविधप्रतीतिदशापन्नस्य तस्य प्रातिभासिकत्वकल्पनमिति चेन्न । असतोऽपरोक्षप्रतीत्ययोग्यतासिद्धौ तथा प्रतीयमानस्य तस्यैव प्रातिभासिकत्वसिद्धिः । प्रातिभासिकत्वसिद्धौ च प्रतिभासदशापन्नस्य शशशृङ्गस्याप्यसत्त्वाभावादसतोऽपरोक्षप्रतीत्ययोग्यतासिद्धिरित्यन्योन्याश्रयप्रसङ्गात् । तस्मात्साधूक्तं दोषवशाच्छुक्तिरेवात्यन्तासद्रजतात्मना प्रतीयत इति । किंच तवापि मते प्रतिभासमात्रशरीरस्य प्रतीतेः पूर्वमविद्यमानतयाऽसन्निकृष्टस्यास्य कथमपरोक्षतो भानम् । तदनपेक्षसाक्षिणेति चेन्न । तस्यापि बहिरस्वातंत्र्यात् । अविद्याया आन्तरत्वेन तदुपादानकरजतस्याप्यान्तरत्वमिति चेन् । न । प्रत्यगाश्रिताविद्याया आन्तरत्वेऽपि शुक्त्यवच्छिन्नचैतन्याश्रिताविद्यायास्तदाश्रितशुक्तिवद्बाह्यत्वावश्यंभावात । अन्यथा परसुखमपि कुतो न साक्षी साक्षात्कुरुते । चैतन्याभेदादभेदस्यावच्छेदकभेदाद्भेदस्य चोभयत्रापि साम्यात् । किंच तवापि साक्षी कथमविद्यमानमुल्लिखेत् । नहि सुखदुःखेच्छाप्रयत्नादिकमविद्यमानमुल्लिखन् साक्षी वीक्ष्यते । स्वोल्लेखानन्तरं विद्यमानमुल्लिखतीति चेत् । तदुल्लेखे सति विद्यमानता विद्यमानस्य चोल्लेख इत्यन्योन्याश्रयः । उत्पत्तिसमय एवोल्लिखति चेत् । तर्हि क्षणिकक्रियाविद्युदादिकमिव कथंचिच्चक्षुरेव कुतो न गृह्णीयात् । केवलाविद्यकस्यापि तमस इव चक्षुर्विषयत्वसंभवाचक्षुषा पश्यामीत्यनुभवस्योभयत्र साम्यात् । किमनया सर्वजनविश्वसनीयस्य साक्षिणो भ्रांतित्वकल्पनया । अपिच शुक्त्यवच्छिन्नचैतन्याश्रिताज्ञानोपादानकत्वे च रजतस्य सर्वसाधारण्येन सर्वोपलभ्यत्वप्रसङ्गाच्च । चैतन्याभेदादेव तदाश्रिताज्ञानस्य स्वीयत्वं वाच्यम् । सच सर्वजीवसमान एवेति कथं न सर्वसाधारण्यम् । समीपस्थस्याज्ञाननाशेन तदुपादानकरजतनाशान्नोपलब्धिश्चेत् । तर्हि दूरस्थस्यापि तदभावेनोपलब्धिर्न स्यात् । नह्येकस्य तंतुनाशान्नष्टपटानुपलंभेऽन्यस्य पटोपलंभोऽस्ति । नच वाच्यं समीपस्थसंबन्धिज्ञानेनाज्ञाननाशात्तस्यैव तदुपादानकरजतं नष्टं नान्यस्येति । देवदत्तसंबन्धिप्रदीपेन तमोनाशेऽन्यस्यापि तमोनाशदर्शनात् । नह्येककरधृतमुद्गरेण

घटनाशे तदा तत्र पुनरन्यस्य घटोपलब्धिरस्ति । अन्यस्य स्वाज्ञानाद्भ्रम इति चेत् । स्वाज्ञानादिति कोऽर्थः । स्वाश्रिताज्ञानादिति वा शुक्त्यवच्छिन्नचैतन्याश्रिताज्ञानादिति वा । नाद्योऽनङ्गीकारात् । न द्वितीयस्तस्य नष्टत्वात् । शुक्तेः सर्वसाधारण्येन विशिष्य स्वीयत्वायोगाच्च । तत्रैव पुनरज्ञानान्तरमावरणमस्ति चेत्तर्हि पूर्वेणापि न शुक्तिरुपलभ्येत । नहि दशजनपटावृतो घटः स्वाधीनपटनाशमात्रेणापरपटावरणे सत्यप्युपलभ्यते । शुक्तेः सर्वसाधारण्येन तदाश्रिताज्ञाने स्वीयपरकीयविभागायोगाच्च । नहि विषयावरकमेकं तमः एकस्यैवावरकं नापरस्येत्यस्ति । विषयाश्रितमप्येकैकमेकैकस्यावरणं नान्यस्येत्यन्यत्रादृष्टमप्येकत्रानेकावरणं कल्प्यत इति चेन्न । अनन्तभ्रांतिविषय एकैकत्रानन्ताज्ञानकल्पनाया अप्यापातात् । अस्तु साऽपीति चेत् । न । बह्वदृष्टकल्पनाप्रसङ्गात् । सर्वजनसंमतप्रतिपुरुषनियतावश्यककाचादिदोषवशादधिष्ठानतत्त्वज्ञानप्रतिबन्धेन तत्र तत्र तस्य तस्य भ्रम इति दृष्टानुसारेण सर्वसामञ्जस्याच्च । निरुपादानककार्यानुदयादुपादानतयाऽज्ञानस्याप्यवश्यं कल्पनेत्युक्तमेवेति चेत् । सत्यमुक्तं दुरुक्तं तु तत् । त्रैकालिकनिषेधप्रतियोगिनः शुक्तिरजतादेः शशविषाणवदुपादाननिरपेक्षत्वात् । सोपादानत्वाग्रहेऽपि रजताभिमतस्य तस्य रजतावयवा एवोपादानतया कुतो न कल्प्यन्ते । उक्तवक्ष्यमाणन्यायेनादृष्टत्वस्योभयत्र साम्यात् । दृष्टानुसारस्य परपक्ष आधिक्याच्च । दृष्टातिक्रमेणादृष्टकल्पनायां च धर्मिकल्पनातो वरं धर्मकल्पनेति न्यायेन दृष्टमदृशशुक्त्यंशानामेव कुतो नोपादानत्वकल्पनम् । एवं हि सति सामान्यतोदृष्टपुरोवर्त्यधिष्ठानतादात्म्यावगाहीदं रजतमिति ज्ञानमप्युपपन्नं स्यात् । बाधस्तूभयत्र समाधेयः । शुक्तिमहं न जानामीति प्रत्यगाश्रिताज्ञाने प्रमाणसद्भावेऽपि शुक्त्यवच्छिन्नचैतन्याश्रिताज्ञाने विशिष्य प्रमाणाभावाच्च । एवंच यदा तन्निष्ठैकाज्ञानकल्पनमप्यप्रामाणिकम् । किमु वाच्यं तदा तादृशानन्ताज्ञानकल्पनमप्रामाणिकमिति । किंचाज्ञानविषयस्य घटादेर्बाह्यपदार्थस्य घटमहं न जानामीत्यादावज्ञानप्रतिभासे साक्षिणि कथमुल्लेखशङ्का इत्याशंक्य (वि. पु. १०५ पं. २) * विषयैः सह साक्षिचैतन्येऽज्ञानाध्यासात्प्रतिभासः * इति विवरणे वक्ष्यमाणत्वात्साक्षिण्यध्यस्ता एव शुक्त्यादयो ज्ञानसंबन्धिनो न बाह्याः । बहिरस्वतन्त्रे साक्षिणि प्रतिभासायोगात् । एवंच सति बाह्यशुक्ताविदं

रजतमिति प्रतीयमानरजतस्य किमुपादानम् । नच (त. पु. १०५ प. २०) * लौहित्यमुखयोः स्फटिकाचलप्रतिबिंबितयोः परस्परसंबन्धो यथा भासते 'लोहितं मुखमि'ति तथाऽज्ञानानात्मनोरात्मन्यध्यासात्परस्परसंबन्धप्रतिभासोपपत्तिः * इति तत्वदीपनोक्तेर्बाह्यशुक्त्यज्ञानमपि तदेवेति वाच्यम् । एवमपि मुखप्रतिबिंबस्यैव यथा लौहित्यसंबन्धो न बिंबभूतमुखस्य 'लोहितं मुखमि'ति व्यवहारस्तु बिंबप्रतिबिंबयोरैक्याभिप्रायेण वोपचारेण वा, नतु लौहित्यस्य बिंबभूतमुखसंबन्धाभिप्रायेण, अनुभवविरुद्धत्वात् तथा साक्षिण्यध्यस्तशुक्त्यादेरेव कथंचिदज्ञानसंबन्धो न बाह्यस्येति त्वन्न्यायेनैव प्राप्तेः । नहि प्रतिबिंबरक्तिम्ना बिंबे रक्तकार्यान्तरोत्पत्तिर्दृष्टचरा । नवा प्रतिमुखजलसंबन्धान्मुखस्यार्द्रता दृष्टा । बिंबप्रतिबिंबयोरिवाध्यस्तानध्यस्तबाह्यान्तरशुक्त्योः शरीराद्यस्वच्छद्रव्यान्तरितयोर्बिंबप्रतिबिंबभावस्यैक्यस्यचायोगेन सुतरां तत्प्रयुक्तकार्यसंकरायोगाच्च । नचान्तःकरणवृत्त्या सह बहिर्निर्गते साक्षिणि तेषां प्रतिफलनमिति वाच्यम् । तथासति प्रमाणवृत्तिविषयाणां तेषामज्ञानविषयत्वस्य सुतरामयोगात् । निवृत्ते साक्षिणि प्रतिफलननिवृत्तेरावश्यकत्वेन निमीलितनयनेनापि ज्ञायमानेऽज्ञाने तदुल्लेखासंभवाच्च । नह्यभिमुखे दर्पण इव पराङ्मुखेऽपि तस्मिन्प्रतिफलनं दृश्यते। तस्माद्बाह्ये शुक्तिशकलादावारोप्यमाणरजतस्य न किंचिदुपादानं पश्यामः । किंचैवमविद्याविषयतया शुक्त्याद्यनन्तपदार्थानामप्यन्तरारोपावश्यंभावे आन्तरमेव जगदस्तु । न बाह्यमपि गौरवात् । त्वमेव बाह्यो भव । सार्वजनीनबाह्यजगतस्त्यागायोगश्चेत्तर्ह्यसार्वजनीनमान्तरं जगत्त्यज । अज्ञानग्राहकसाक्षिणि बाह्यविषयोल्लेखस्तु स्मरणाद्युपनायकसहकारेणास्तु । यदि चान्तरमेवाज्ञानं तदुपादानं तदा किमपराद्धमापणस्थरजतावयवैः । व्यधिकरणतायां उभयत्र साम्यात् । दृष्टानुसारितायां अत्राधिक्याच्च । प्रतीतेः प्रागूर्ध्वं च सत्त्वप्रसङ्गस्तदपराध इति चेत् । तर्हि किमविद्योपादानकानां सर्वेषामपि प्रागूर्ध्वं चासत्त्वनियमः? येनेदमप्यविद्योपादानकत्वे प्रागूर्ध्वमसत्स्यात् । (त. पु. ५५ प. २०) * वस्तुतस्त्वस्मन्मते संतमसस्य न परमाणुकारणकत्वं किंत्वविद्यैव चिदधिष्ठिता तमोरूपेण विवर्तत इत्याह * इति तत्वदीपनोक्त्या (वि. पु. ५५ प. २) * मूलकारणादेव जन्म सिद्ध्यति * इति विवरणोक्त्या च केवलाविद्यके तमस्येव व्यभिचारात् ।

कथं तर्हीदानीं बाध इति चेत् । तत्रापि कथम् । अविद्यामात्रोपादानकस्यापि तमस इवाबाध्यत्वसंभवात् । रजतावयवोपादानकरजताभावाच्च बाधश्चेन्ममापि तद्देशनिष्ठरजतावयवोपादानकरजताभावाद्बाध इति समम् । नच रजतमप्यान्तरमेवेति वाच्यम् । बाह्यमतप्रवेशापत्तेः । आन्तरशुक्तेरध्यस्तत्वेन निरधिष्ठानभ्रमत्वापत्तेः । (वि. पु. ९१ प. ३) * अन्तःकरणस्य चेन्द्रियसंयोगादिसापेक्षत्वात् * इत्यादेरसङ्गतत्वप्रसङ्गात् । 'मयि रजतं' 'मयीदं रजत' 'महं रजतमि'ति वा प्रतीत्याकारापातात् । अधिष्ठानाध्यस्तयोः शुक्तिरूप्ययोरुभयोरप्यान्तरत्वे बाह्यशुक्तींद्रियसन्निकर्षस्य काचकामलादिदोषाणां चानुपयोगप्रसङ्गात् । बहिःप्रवृत्त्ययोगात् । आन्तरशुक्तेरध्यस्ततया प्रमाऽयोगेनज्ञाननिवर्तकाभावप्रसङ्गाच्च । शुक्तिरजतयोरुभयोरप्यध्यस्तत्वे 'नेदं रजतं किंतु शुक्तिरेवे'ति बाधकप्रमाऽऽकारस्य विकारापत्तेश्च । ×आन्तररजतस्य शुक्तिकासंसर्गो भ्रम इत्युक्तमिति चेत्सत्यम् । तदेव विवेचनीयम् । किमान्तररजतस्य बाह्यशुक्तिकया सह संसर्गः संयोग उत तादात्म्यम् । न तावदाद्यः । दूरस्थतयाऽसंभवात् । अन्तःकरणवृत्तिद्वारा बहिर्निर्गते साक्षिणि सह निर्गतस्य तस्य तत्संभव इति चेन्न । एवं सति 'रजतवदिदमि'ति प्रतीत्याकारापत्तेः । भ्रमत्वायोगाच्च । नहि दण्डसंयुक्ते पुरुषे 'दण्डोऽयमि'ति प्रतीतिः । यत्र यत्र स तादृशसाक्षिसंबन्धस्तत्र सर्वत्र रजतप्रतीत्यापत्तेश्च । नहि क्रमेणैकदण्डसंयोगवंतोऽपि बहवो दण्डितया न प्रतीयन्ते । न द्वितीयः । आन्तररजततादात्म्यस्य पुरोवर्तिन्यभावात् । तस्याप्यारोपश्चेत्किं तदुपादानम् । आरोपाधिष्ठानशुक्तिशकले पुरोवर्तिन्यज्ञानाभावात् । नह्यज्ञानाधारसाक्षिसंबन्धेनापि पुरोवर्तिनि तस्मिन्ननात्मन्यज्ञानमाधीयते । अपसिद्धान्तात् । एवंचाज्ञानाधारे साक्षिणि स्वस्मिन्नेव तदुपादानकरजतवत्तदुपादानकतत्तादात्म्यस्यापि कथंचित्संभवेऽप्यन्यत्र तदसंभवादेव । नहि स्वजिह्वास्थपित्तेन ततोऽन्यत्र तिक्तकार्योदयः । आन्तरशुक्तिविषयस्य तस्य बाह्यशुक्तावारोपोपादानत्वासंभवाच्च । नह्येकशुक्तिविषयाज्ञानेन ततोऽन्यत्रारोपः । कथंचित्संभवे किमनेनान्तररजतारोपेणान्यत्र तत्तादात्म्यारोपेण च । साक्षिसंबन्धबललब्धाज्ञानोपादानेन

---

×(वि. पु. ९४ प. २) "आत्माश्रयाध्यासस्य शुक्तिकासंसर्गो विभ्रम" इति विवरणवाक्यनिष्पिंडितार्थोऽयम् ।

शुक्तिशकल एव रजतादेरारोपसंभवात् । अन्यथाऽन्यथाख्यातिमतप्रवेशापत्तेश्च । वस्तुतस्त्वभूत्वाभाविस्वस्य जन्मतया भूत्वा पुनरभाविस्वस्य च नाशत्वेनोभयोरपि स्वोत्तरकाले स्वपूर्वकाले च प्रतियोगिनोऽभावावश्यंभावात् । भावाभावयोर्विरुद्धतया भावित्वावस्थायामभावस्यायोगेन च त्रैकालिकनिषेधान्तर्वर्तिमध्यकालीननिषेधाख्याभावायोगान्मिथ्यात्वे जन्मनाशयोरेवायोगेन त्वद्रीत्या मिथ्यात्वेनाभिमते जगत्यज्ञानोपादानकत्वचिंता ज्ञानविनाश्यत्वचिंता च व्यर्थैव । सत्यत्वमतेऽपि स्वस्वकारणादेवोत्पत्तिविनाशयोः संभवाद्व्यर्थैवेयं चिंता । नच वाच्यं व्यावहारिकपारमार्थिकयोरविरोधितया पारमार्थिकत्रैकालिकनिषेधस्थमाध्यमिकनिषेधस्य जन्मनाशोपयोगितयोक्तव्यावहारिकभावावस्थां प्रत्यविरोधितया जन्मनाशयोरुपपत्तेरुक्तचिंताद्वयमपि सार्थकमिति । तथासति मिथ्यात्वापरपर्यायश्रौतनिषेधाविरुद्धाया उक्तभावावस्थाया एव बाधकान्तराभावात्पारमार्थिकत्वापातेन स्वस्वकारणादेव जन्मविनाशोपपत्तेरुक्तचिंताद्वयवैयर्थ्यस्यापरिहारात् । कथंचित्सार्थक्यमर्थयसे चेत् । उक्तविधया विचारासहं त्वन्मतमेवाज्ञानोपादानकं ज्ञानविनाश्यं चेति ब्रूमः । तस्मादविचारितरमणीयमेवेदं मायामतं पूर्वोत्तरविचारे तून्मत्तप्रलपितमेव । किंच घटादिस्वरूपमाच्छाद्य निजस्वरूपमेव प्रदर्शयदुद्भूतरूपवदंधकारपटादिकमावरणं दृष्टम् । इदंतु चक्षुर्ग्रहणायोग्यमनुपलभ्यमानरूपमज्ञानं वायुरिव गगनमिव वा कथं शुक्तेरावरणम् । किंच कुड्यावृते हि वस्तुनि तदाकार इव तच्छ्वेतिमादिकमप्यनुपलभ्यमानं दृष्टम् । तथाच शुक्तेरावरणं वस्तु तद्रूपस्याप्यावरणमेवेत्यधिष्ठानप्रधानसादृश्यस्याप्यग्रहणात्कथं तत्र रजतभ्रमः । अपिचावृते वस्तुनीदंत्वेनाप्यावरणस्यैव ज्ञानं दृष्टम् । नत्वसन्निकृष्टस्याऽऽवृतस्य । तथाचावरणाज्ञाने तदुपादानकरजताभेदज्ञानं मृदि घटाभेदज्ञानमिव जले बुद्बुदज्ञानमिव वा प्रमैव स्यात् न भ्रम इति । सर्वमिथ्यात्वं वदताऽऽविपालगोपालं मिथ्यात्वेनाभिमतस्य शुक्तिरजतस्य सत्यत्वमङ्गीकार्यं स्यात् । किंच दूरे स्थितस्यावरणं पटादिकं समीपगतस्याप्यावरणं दृष्टम् । तथाच दूरस्थितस्येव समीपस्थस्यापि भ्रमानुवृत्तिरेव स्यात् । समीपगमनेनावरणनिवृत्तेर्भ्रमनिवृत्तिरिति चेत् । किं तदावरणनिवर्तकम् । शुक्तिप्रमा चेत्सैव कथं स्यात् । नह्यावरणपटनिवृत्तेः पूर्वमाव्रियमाणघटस्यापरोक्षतः प्रमा समीपगमनेऽपि क्वचिद्दृष्टा । किंच

दूरगतस्यापि कुतो न तदावरणनिवृत्तिः । निवर्तकशुक्तिप्रमाऽभावादिति चेत् । सापि कुतो न दूरगतस्य । अतिदूरत्वरूपदोषवशात् इति चेत् । तर्ह्यावश्यकतद्दोषादेवास्तु भ्रमः । समीपगमने तु दोषाभावादस्त्वधिष्ठानप्रमा । ततश्च भ्रमनिवृत्तिरपि स्यात् । किमजागलस्तनायमानेनाज्ञानावरणेन । तस्मादतिदूरत्वादिदोषवशाददृष्टः शुक्त्यादेराकारविशेषः समीपगमने दोषाभावाद्दृश्यत इति विशेषदर्शनाभावतत्सद्भावनिमित्ते एव भ्रमानुवृत्तिनिवृत्ती अङ्गीकर्तुमुचिते । आवरणकल्पनं त्विदं चिरकालार्जितस्वप्रेक्षावत्त्वावरणमेव । एतदेवाभिप्रेत्य "बह्वदृष्टकल्पनाप्रसङ्गादि"त्युक्तम् । यच्चोक्तं (वि. पु. ९१ प. ३) * अन्तःकरणस्य चेन्द्रियसंयोगादिसापेक्षत्वात् * इति । तदपि न युक्तम् । बहिरस्वतन्त्रस्य मनसो बाह्यार्थज्ञानार्थं तदपेक्षणेऽपि त्वन्मत आविद्यकत्वेनाऽऽन्तररजतज्ञानार्थं साक्षिणैव तदनपेक्षासंभवात् । साक्षिवेद्याविद्या नान्तःकरणयोग्येति चेत् । तर्ह्ययोग्यत्वादेवाग्रहणमिति वक्तव्यम् । उक्तो हेतुस्त्वनुपयुक्त एव । यच्चोक्तं तत्त्वदीपने (त. पु. ९३ प. ३२) * काचकामलादिदोषाणां परस्परव्यभिचारित्वात्कार्येऽननुगतत्वाच्च नोपादानत्वं * इति । तदपि न । एतादृशाननुगमस्य व्यभिचारस्य च कारणमात्रदूषणत्वेन दोषाणामप्रमां प्रत्यनुपादानत्ववदनिमित्तत्वस्यापि प्रसङ्गात् । नहि कार्यव्यभिचारि कारणमिति च सङ्गच्छते । कार्यवैजात्येन व्यभिचारं परिहृत्य निमित्ततासमर्थने तूपादानत्वमेव कुतो न तथा समर्थ्यते । एवं सति धर्मिकल्पनातो वरं धर्मकल्पनेति न्यायोऽप्यनुसृतः स्यात् । नच वाच्यमज्ञानस्यैकत्वेन विनापि कार्यवैजात्यकल्पनयोपादानत्वं निर्वोढुं शक्यत इति । विजातीयानां निमित्ततानिर्वाहाय रजतभ्रमरज्जुभ्रमत्वादिरूपेण कार्यवैजात्यकल्पनाया आवश्यकतया विचित्रकार्यं प्रति च घटपटादौ मृत्त्वादेरिव विचित्रोपादानस्यैवापेक्षितत्वेन तदेकत्वस्य प्रकृतानुपयोगित्वात् । त्वयापि हि (त. पु. १०९ प. २८) * "मायां तु प्रकृतिं विद्यादि"त्यादिवाक्यात्कल्पनालाघवानुगृहीतान्मूलाज्ञानमेकमेष्टव्यम् । तस्य चानन्ता अवस्थाःकल्प्यन्ते व्यवहारनिर्वाहाय * इत्यविद्यावैचित्र्यस्य वक्ष्यमाणत्वाच्च । त्वन्मत एकस्याज्ञाननाशेन भ्रमनिवृत्तावपि तत्रैव पुनरन्यस्याज्ञानसापेक्षभ्रमदर्शनेन तद्वैचित्र्यस्यावश्यकत्वाच्च । एवंच तत्राप्येकभ्रमोपादानाज्ञानावस्थाविशेषस्यापरभ्रमं प्रत्यनुपादानतया कथं नानु-

गमः। अवस्थान्तरं तदुपादानमस्तीति तु दोषान्तरमस्तीत्यनेन समम्। प्रमाविशेधिस्वरूपाज्ञानत्वेन च तेषामनुगमने तादृशेनैव दोषत्वेन दोषाणामपि कुतो नानुगमनम्। पराकौशलप्रदर्शनायैवेदमुदितम्। न वस्तुतः। अस्माकमपि दोषाणामनुपादानत्वादिति द्रष्टव्यम्। यच्चोक्तं विवरणे (वि. पु. ९६ प. ५) * प्रत्यक्षं तावत् "अहमज्ञो" "मामन्यं च न जानामी"त्यपरोक्षावभासदर्शनात् * (वि.पु.९७ प.१९) * "मयिज्ञानं नास्ती"ति प्रतिपत्तावात्मनि धर्मिणि प्रतियोगिनि चार्थेऽवगते तत्र ज्ञानसद्भावाज्ज्ञानाभावप्रतिपत्त्ययोगात्। अनवगतेऽपि धर्म्यादौ सुतरामभावानवगमात् * (वि.पु.९८प.३) * इह च "त्वदुक्तमर्थं संख्यां वा शास्त्रार्थं वा न जानामी"ति * इत्यादिना भावरूपाज्ञानसाधनमभावरूपाज्ञानखण्डनं च। अत्र ब्रूमः। किमनेन ज्ञानसामान्याभावे बाधकमुच्यते उत ज्ञानविशेषाभावे। नाऽऽद्यः। चेतनमात्रस्य स्वदेहगेहादिज्ञानसद्भावेन ज्ञानसामान्याभावस्य क्वाप्यभावात्। कथं तर्ह्यहमज्ञ इति सामान्यतो ज्ञाननिषेध इति चेन्न। विद्यमानस्यापि ज्ञानस्याल्पत्वेन कृशोदर्यामनुदरा कन्येतिवदल्पधनवत्यकिंचन इतिवच्च तत्संभवात्। यत्र तु घटादौ ज्ञानसामान्याभावोऽप्यस्ति तत्रापि पुंसा दृश्यमाने घटे धर्मिणि ज्ञानत्वप्रत्यासत्त्या ज्ञातज्ञानमात्रस्याभावबोधसंभवेन त्वदुक्तानुपपत्तेरनवकाशात्। न द्वितीयः। "तस्यैष आत्मा विवृणुते तनूं स्वामि"त्यादिश्रुत्युक्तस्वस्वरूपानन्दादिगुणसाक्षात्कारस्य स्मृतस्य साक्षिणाऽहमित्येवोल्लिख्यमाने स्वस्मिन् धर्मिण्यभावबोधसंभवात्। घटमहं न जानामीत्यादावपि घटपदादिना घटादेरेव ज्ञायमानत्वात्स्मृतघटसाक्षात्काराख्यज्ञानस्य नेति निषेधावगमसंभवान्न काप्यनुपपत्तिः। प्रत्युत तवैव स्वरूपज्ञानाविरोधिनि वृत्तिज्ञानोत्पत्त्यप्रतिबन्धकतया तस्याप्यविरोधिनि भावरूपाज्ञाने विरोधार्थकनञ्प्रयोगानुपपत्तिः। अतस्त्वयाप्यस्मदुक्तरीत्या मानससाक्षात्कारस्याभाव एव बोध्यत इति वाच्यम्। एवंच त्वदुक्ता सर्वाप्यनुपपत्तिस्त्वयैव समाधेयेत्यात्मीय एव बाणो भवन्तं प्रहरति। अथवाऽहमज्ञो मामन्यं च न जानामीत्यादिप्रत्यक्षं सामान्यतो ज्ञातस्य स्वस्य वाऽन्यस्य वा विशिष्य ज्ञानाभावपरमस्तु। अत्र च "आत्मनि धर्मिणि प्रतियोगिनि चार्थेऽवगते तत्र ज्ञानसद्भावाज्ज्ञानाभावप्रतिपत्त्ययोगात्। अनवगतेऽपि धर्म्यादौ सुतरामभावानवगमादि"त्यादिना यद्दूषणमुदितं तत्त्वयैव समाधेयम्।

तथाहि। (पं पु. १०६ प. २) * सा च न जडेषु वस्तुषु तत्स्वरूपावभासं प्रतिबध्नाति। प्रमाणवैकल्यादेव तदग्रहणसिद्धेः * इति पञ्चपादिकायाम् (वि. पु. १०४ प. २) * येन यस्यातिशय उत्पद्यते स तस्य विषयः। नचाज्ञानेनानात्मन्यावरणातिशयजन्म। प्रमाणाभावादर्थानुपपत्तेश्च * (वि. पु. १०५ प. ३) * तस्मान्नास्त्यनात्मन्यावरणे प्रमाणम्। नच स्वयमेव प्रकाशहीनस्य जडस्यावरणार्थोऽपि संभवति। तस्मादतिशयाभावान्नाज्ञानविषयोऽनात्मा *। (वि. पु. १०८ प. ३) * आत्माश्रयमात्मविषयं चाज्ञानमन्तरेणानात्मसु प्रतिविषयं भावरूपाज्ञानसद्भावे प्रमाणाभावात्। विषयाग्रहणस्य प्रमाणवैकल्यादप्युपपत्तेः * इत्यादिना विवरणे च वक्ष्यमाणत्वाज्जडविषयमज्ञानं नैवास्तीति भवतो राद्धान्तरहस्यम्। ततश्च मां नजानामीत्येकमेव प्रत्यक्षं तवाप्युपपादनार्हम्। उत्तरं तु सर्वमुत्तरविरुद्धमेवेति यत्किंचिदेव। एवंच घटपटाद्यनन्तजडपदार्थेषु सार्वजनीनतया जायमानस्य घटमहं न जानामीत्याद्यज्ञानानुभवस्य ज्ञानाभावविषयत्वमेव त्वयापि वक्तव्यमिति तव प्रासत्वदाशंकितपर्यनुयोगस्यास्य त्वयैव परिहरणीयत्वात्। अन्यत्रापि तथैव परिहारसंभवाच्च। नच वाच्यं घटमहं न जानामीत्यस्य घटावच्छिन्नचैतन्यमहं न जानामीत्यर्थ इति। तथा सति घटमहं जानामीत्यस्यापि तथैवार्थप्रसङ्गेन घटस्य ज्ञानाज्ञानबहिर्भावापातात्। चैतन्यस्यैव चैतन्यविषयत्वापाताच्च। किंचेदं स्वमतदुराग्रहादुच्यत उत लोकव्यवहारमनुसृत्य। नाऽऽद्यः। तस्याप्रयोजकत्वात्। न द्वितीयः। लोकैस्तथाऽव्यवहारात्। घटं भिंधि घटं छिंधि घटेन जलमाहरेत्यादावपि तस्यैव प्रसङ्गाच्च। "प्रमाणवैकल्यादेव तदग्रहणसिद्धे"रिति त्वयैव जडेषु ज्ञानाभावाङ्गीकाराच्च। किंचैवमात्मातिरिक्ताणुरेण्वादिब्रह्माण्डान्तानन्तपदार्थपलपरिमाणाद्यज्ञानविधुरस्य तव सार्वज्ञं कुतो नाभूत्। भावरूपाज्ञानस्य चिन्मात्रविषयत्वाङ्गीकारेणाऽचेतनविषयेऽज्ञानस्यैवाभावात्। नह्यन्यविषयकाज्ञानेनान्यत्राज्ञानवान् भवति। शास्त्रेऽधस्य लोकेऽप्यंधत्वापातात्। गृहान्तर्वर्तितमसा तत्रत्यघटस्येव बहिःस्थितपदार्थस्याप्यज्ञानापातात्। उक्तरीत्या त्वयैवानङ्गीकाराच्च। नच वाच्यं ज्ञातुश्चेतनस्याज्ञानापिधानान्नतज्ज्ञानमिति। स्वविषयकाज्ञानेनान्यत्राज्ञानायोगादेव। (पं पु. १०७ प. २) * अतस्तत्र रूपान्तरावभासहेतुरेव *। (पं. पु. १२२ प. २) *

अहंकाराद्यतद्रूपप्रतिभासनिमित्तं च भवति * इति पञ्चपादिकायां वक्ष्यमाणत्वेन भावरूपाज्ञानस्यानात्मज्ञानोपयोगित्वाच्च । अज्ञानस्य विक्षेपशक्तिमतो विश्वभ्रमहेतुत्वाच्च । किंचान्धकारमध्यस्थितस्यापि पुंसः तदनावृतघटदर्शनवदज्ञानावृतस्यापि ज्ञातुस्तदनावृतजगज्ज्ञानं कुतो न जायते । चिन्मात्राश्रिताज्ञानस्य काचादिवन्नयनदोषत्वस्याप्यभावात् । तथासति ब्रह्मज्ञानपर्यन्तं घटादिप्रपञ्चज्ञानाभावापातादुक्तवचनविरोधाच्च । तत्तत्पदार्थावच्छिन्नचैतन्याज्ञानान्न सार्वज्ञमिति चेन्न । घटोदरस्थतमसा बहिरप्रकाशादर्शनात् । यदि घटाद्यवच्छिन्नचैतन्यमेव घटादिज्ञानम् । तच्चावृतमिति मतम् । कथं तर्हि करणसंप्रयोगे तज्ज्ञानम् । वृत्त्याऽज्ञाननिवृत्तेरिति चेन्न । घटवृत्त्या पटाज्ञानस्यानिवृत्तेः । यदि च तत्तद्विषयकवृत्तिज्ञानमेव तत्तदज्ञाननिवर्तकमिति वदेः । तदापि वक्तव्यम् । तदज्ञानमिति कोऽर्थः । तद्विषयकाज्ञानमिति तु न । जडेऽज्ञानानङ्गीकारात् । तदवच्छिन्नचैतन्याज्ञानं चेन्न । भिन्नविषयकत्वेन घटवृत्त्या तन्निवृत्त्ययोगात् । महता प्रयत्नेनापि सार्वज्ञपरिहारायाऽऽनीयमानं जडजगदज्ञानं न भावरूपम् । अभावरूपं चेदागतं मार्गे । किंच निवर्तिकाऽपि वृत्तिः कुतो नेति वाच्यम् । यदिचाज्ञानावरणात् करणविप्रकृष्टत्वात्प्रत्यक्षायोग्यत्वाद्वा न तेषां ज्ञानमिति ब्रूषे । कथं तर्हि प्रतिब्रूपे । यतो वृश्चिकभयात्पलायमानस्याशीविषमुखे निपतनमिव घटमात्रविषयकज्ञानाभावज्ञानेऽपि विवदमानस्य तत्र बहुतरप्रपञ्चविषयकज्ञानाभावज्ञानाङ्गीकारोऽयमनिच्छतोऽप्यावश्यकोऽभूत् । ज्ञानाभावव्यवहारस्यास्य तज्ज्ञानैकसाध्यत्वात् । एवंचावच्छेदकप्रपञ्चस्य ज्ञानेऽज्ञाने वा तदवच्छिन्नज्ञाननिषेधायोगादित्युभयतःपाशारज्जोः कः परिहारः परस्यापि । यदिच सामान्यतो ज्ञातस्य प्रपञ्चस्य विशिष्य ज्ञानं निषिध्यत इति मतम् । तदाप्यवच्छेदकविशेषज्ञानाज्ञानयोर्न पुनस्तदवच्छिन्नज्ञाननिषेधसंभव इति सैव पाशारज्जू रूपान्तरेण गले निगळीबभूव । अथ यदि त्वमप्यदृष्टगत्यन्तरोऽज्ञाननिषेधेऽवच्छेदकाज्ञानं भूषणमेव नतु दूषणं, घटाभावस्थले घटस्येव तद्विषयकज्ञानाभावस्थले तद्विषयकज्ञानस्य प्रतियोगिरूपस्य सर्वथा हेयत्वात्, इतरथा ज्ञाननिषेधस्य कुत्राप्यसंभवात् , अतिप्रसङ्गस्त्वनतिप्रसङ्गेनैव परिहरणीय इति मन्यसे विन्यसेस्तर्ह्यस्मदीयगृहभित्तिं त्वमेव । तथाचैनमस्मद्दासस्त्वं कथं न नृहरेर्दासः । कथं चैवं व्याहत-

भापी भवान्न दोषी स्यात् । चिन्मात्रविषयकभावरूपाज्ञानसाधकत्वेनाभिमतस्य "मामहं न जानामी"ति प्रत्यक्षस्य पूर्वोत्तराप्रतिपत्तिमूलस्य ततोऽन्यस्य वा प्रत्यक्षस्यैव-मेव ज्ञानाभावविषयतया व्याख्यातुं शक्यत्वेन भावरूपाज्ञानप्रत्यक्षं सर्वमप्यभावरूपा-ज्ञानप्रत्यक्षमेवाभूत् । ततश्च निरायुधः परो मूको वाऽऽस्माको वा स्यादिति । किंच यदेतत्स्वाभिमतपक्षप्रसाधनदक्षं प्रत्यक्षं "मामहं न जानामी"ति । अनेन हि चिन्मात्रविषयकभावरूपाज्ञानं सेत्स्यतीति दुराशयः परस्य । तत्रैवं प्रष्टव्यम् । किमेवं महता प्रयत्नेन साधितस्यापि भावरूपाज्ञानस्यास्ति किंचित्फलमिति । नि-ष्फलं तावन्न वक्तुं युक्तम् । शास्त्रपरिनिष्ठाया बालचेष्टात्वापातात् । विषयावरणं फलं चेत् । ततोऽपि किम् । नह्यावरणमावरणत्वेनैव दूषणम् । इष्टविघातकत्वाभा-वात् । यस्यावरणं तद्विषयकज्ञानप्रतिबन्धश्चेत् । किं स्वरूपज्ञानस्य प्रतिबन्ध उत बाह्यज्ञानस्य । आद्येऽपि किं स्वरूपज्ञानस्यैवाभावसंपादनं प्रतिबन्धशब्दार्थः । उत सत एव ज्ञानस्य कार्याभावसंपादनम् । नोभयमपि । (वि. पु. १११ प. ३) * न तावदावरणं प्रकाशविलोपः । स्वरूपस्यानपायात् । नापि सत एव प्रकाशस्य कार्यप्रतिबन्धः । ज्ञानस्य विषयावभासात्मनोदितस्य स्वकार्ये प्रतिबन्धप्रतीक्षयोर-भावात् * इति विवरण एव दूष्यमाणत्वात् । अज्ञानस्य स्वरूपज्ञानाविरोधित्वेन तत्प्रतिबन्धकत्वायोगाच्च। सति पुष्कलकारणेऽसति च प्रतिबन्धकेऽनुपपद्यमानो "ना-स्ति" "न प्रकाशत" इति व्यवहार एवाघटितमपि किंचित्प्रतिबन्धकं कल्पयिष्यतीति चेत् । न । "ज्ञानस्य विषयावभासात्मनोदितस्य स्वकार्ये प्रतिबन्धप्रतीक्षयोरभावा-दि"ति स्वयैवोक्तत्वेन ज्ञानकार्यस्य "अस्ति" "प्रकाशत" इति व्यवहारस्यैवावश्यकतया तद्विपरीतस्य नास्ति न प्रकाशत इति व्यवहारस्य त्वन्मतेऽसंभवात् । किंचैवमनुप-पद्यमानोऽयं व्यवहारः तादृशं शशशृङ्गमेव कुतो न कल्पयति । अनुपपादकत्वादिति चेत् । किमिदमस्योपपादकम् । प्रकाशतत्कार्ययोरप्रतिलोपे प्रतिबन्धकत्वेनाभिमत-शतेनापि न प्रकाशत इति व्यवहारसंपादनादर्शनात् । नहि तादृशप्रतिनयनान्तरितो घटो न प्रकाशत इति व्यवह्रियते । अपितु प्रकाशाभावसंपादककुड्याद्यन्तरित एव । कथंचित्तत्प्रतिबन्धकत्वे च साक्षिणाऽप्यज्ञानावच्छेदकविषयज्ञानाभावान्न तदव-च्छिन्नाज्ञानज्ञानमित्यात्मीय एव बाणो भवन्तं प्रहरति । अनन्यगत्या परिहारेऽपि

किमपराद्धमभावरूपाज्ञानवादिना । नन्वेवं प्रतिबन्धानिरूपणमप्यघटितघटका-विद्यायाः भूषणमेवेति चेदेवं तर्हि सर्वथा निरूपणानर्हं चेतनत्वमपि कुतो न तस्या भूषणम् । कथं चैवं दुर्घटत्वमभावरूपाज्ञानस्यैव न भूषणम् । अज्ञानत्वाविशेषात् । धर्ममात्रकल्पनारूपत्वेन लघुत्वाच्च । किंचैवमत्यन्ताघटितस्यापि घटकपरमशक्तेर-भावरूपाज्ञानानिरूपणमेव कुतो न भूषणम् । अपिच कोऽयं न प्रकाशत इति व्यवहारः । किं भावरूपाज्ञानस्य व्यवहार उताभावरूपाज्ञानस्य । नाऽऽद्यः । आपा-दकस्यैवान्यतरासिद्धिप्रसङ्गात् । एतद्व्यवहारस्याज्ञानज्ञानरूपस्वरूपज्ञाननिष्पादि-तत्वेन (वि. पु. १२१ प. ४) * नचाधिष्ठानप्रतिबन्धमन्तरेण तत्र विपर्ययकार्य-मुपपद्यते * इति विवरणे वक्ष्यमाणतया विपर्ययकार्यायोगाच्च । द्वितीयस्तु द्वितीये निरसिष्यते । अस्तु तर्हि बाह्यज्ञानस्यैव प्रतिबन्ध इति द्वितीयः पक्ष इति चेत् । तत्रापि वक्तव्यम । कोऽयं तत्प्रतिबन्धो नामेति । तदभावसंपादनं चेत्तर्हि तद्विष-यकज्ञानाभावसंपादनार्थमित्युक्तं स्यात् । तदेतत्फलं विप्रतिपन्नं परं प्रति निरूप्य स्वाज्ञानं सफलयन्परः पुनः प्रष्टव्यः । किमिदं जानास्युत नेति । न द्वितीयः । व्यवहारस्य व्यवहर्तव्यज्ञानसापेक्षत्वेन तज्ज्ञानाभावे व्यवहारस्यैवायोगात् । नह्यसौ शुकबालः । येनाज्ञातमपि व्यवहरेत् । नाद्यः । परखण्डनार्थं प्रयुज्यमानदूषणास्त्रस्य स्वशिरस्येव पातात् । एवंचोच्यमानधर्मिप्रतियोगिज्ञानानुपपत्तिलक्षणदूषणगणप्रक्रिया सर्वाऽपि स्वक्रियाविरुद्धेति पूर्वोत्तरपरिज्ञानाभावरूपमेवाज्ञानं तत्र सिद्धम् । न भाव-रूपाज्ञानम् । स्वरूपज्ञानेन भातस्यापि प्रमाणतो ज्ञानाभावार्थं तदिति चेत् । न । अनुमानादिप्रमाणतोऽपि तस्यैव ज्ञानदर्शनात् । अपरोक्षवृत्त्यभावार्थं चेत् । तर्हि-ज्ञानपिधानवशात्किमपि न जानामीति फलीभूतज्ञानाभावविषयकसार्वजनीनसामान्य-व्यवहारे विशेषपरतायास्त्वयैव अन्तत आश्रितत्वात् । तादृशोऽसौ मूलीभूताभिमत-भवदज्ञानव्यवहारतरुरेव मूले कुठारन्यायकुठारेणावश्यकफलरूपमिमं ज्ञानाभावमेव संगृह्य विवादभूमेर्भवदज्ञानात्कुतो नोन्मूलनीयः । स्वरूपज्ञानेन धर्मिप्रतियोगिप्रति-पत्तावपि मानसापरोक्षवृत्त्यभावस्याप्रतिहतत्वेन मामहं न जानामीत्यत्राप्यनुपपत्त्यभा-वात् । नहि वंशोरगभ्रमस्थले त्वचाऽपरोक्षीक्रियमाणवंशस्य चाक्षुषदर्शनाभावो विरु-ध्यते । नापि न बुद्ध्यते । त्वयाऽपि फलतयैनमभावं जानता (पं .पु. १०६ प. २)

* प्रमाणवैकल्यादेव तद्ग्रहणसिद्धेः * इत्यादौ व्यवहरता चास्या एव गतेराश्रयणीयत्वात् । एवं सति वक्तवन्धदोषेणाप्यदूष्यत्वगुणलाभान्मूलीभूतभावरूपाज्ञानाभावे फलीभूतज्ञानाभाव एव कुतः संपादनीय इति चेत् । ज्ञाने सामग्रीरूपश्रवणाद्यभावस्योक्तत्वात् । अपिच किं ज्ञानसामान्याभावज्ञानमनेन दूषयस्युत ज्ञानविशेषाभावज्ञानम् । नाद्यः । यथा तत्रापि सामान्यतोऽहमज्ञ इत्युक्ते ज्ञानसामान्यविरोधि नाज्ञानं सिद्ध्येत्, स्वरूपज्ञानपरोक्षज्ञानाविरोधित्वादज्ञानस्य, अपित्वपरोक्षवृत्तिविरोध्येवाज्ञानं, तथा ममाप्यहमज्ञ इति ज्ञानसामान्याभावव्यवहारस्य ज्ञानविशेषाभावपरत्वसंभवेनोक्तविधया पश्वादिसाधारणान्नपानादिज्ञानस्याहमिति स्वरूपमात्रज्ञानस्य प्रयुज्यमानाहमादिपदावलीज्ञानस्य चावश्यकत्वेन चेतनमात्रे ज्ञानसामान्याभावस्याभावेनेष्टापत्तेः । सुषुप्तिदशायामपि "न बाह्यं किंचन वेदे"ति बाह्यज्ञानाभावस्यैवोक्तेः । स्वरूपज्ञानस्य तदापि सत्त्वात् । यत्तु घटादौ सोऽभावस्तत्र ज्ञानत्वेन ज्ञातप्रतियोगिभूतज्ञानसामान्याभावः परिदृश्यमाने घटादौ "ज्ञानमात्रमत्र नास्ति" "ज्ञानमात्रशून्योऽयमि"ति वा कथं नानुभूयते । अहमज्ञ इति सामान्यव्यवहारस्य निष्किंचनोऽहमिति विशेषार्थकसामान्यव्यवहारवदुपपत्तेः । मयि ज्ञानं नास्ति मां न जानामीत्यादावपीयमेव गतिः । अपरोक्षवृत्तिमात्रविरोध्यज्ञानं वदतस्तवाप्यस्मदनुगतिरेव गतिः । न द्वितीयः । स्मर्यमाणघटविषयकस्मृतचाक्षुषापरोक्षज्ञानाभावस्यानुभूयमाने आत्मन्यनुभवसंभवात् । घटमहं पश्यामीति प्राचीनानुव्यवसायेऽनुभूतप्रतियोगिरूपचाक्षुषापरोक्षज्ञानस्मरणस्य तदवच्छेदकघटस्मरणस्य स्वात्मानुभवस्य च बाधकाभावेन धर्मिप्रतियोग्यधिगमसद्भावात् कथमुक्तदर्शनाभावानुभवासंभवः । जानामीति ज्ञानसामान्यवाचकपदस्य नञो विरोधार्थकत्वं वदता त्वयाऽप्यपरोक्षवृत्तिरूपविशेषपरताऽनुसर्तव्यैव । तस्माद्धटमहं न जानामीत्यादिज्ञानाभावप्रत्यक्षे न काचिदनुपपत्तिः । अवश्यं चैतदेवम् । उक्तविधयाऽनात्मनि भावरूपाज्ञानानङ्गीकारेणाबाधितानात्मघटादिविषयैतादृशाज्ञानानुभवस्य त्वयाऽपि ज्ञानाभावपरतया व्याख्यातव्यत्वात् । तर्हि "त्वदुक्तमर्थं संख्यां वा न जानामी"त्यादौ कथं ज्ञानाभावज्ञानं नित्यपरोक्षस्य शास्त्रार्थभूतधर्मादेः कदाऽप्यपरोक्षायोग्यत्वादिति चेत् । न । एवं तर्हि तद्विषयकापरोक्षज्ञानात्यन्ताभावस्य कुतो नैतज्ज्ञानम् । धर्मादिकं

कस्यचित्प्रत्यक्षं वस्तुत्वाद्घटादिवदित्यनुमानादिना प्राप्ततत्परोक्षज्ञानस्य प्रतियोगिनोऽत्यन्ताभावोऽनुभूयमाने स्वस्मिन्कुतो नानुभूयते। अथवा संमुग्धतया ज्ञातस्यैव शास्त्रार्थस्य निर्णयज्ञानाभावानुभवोऽयमस्तु। प्रतियोगिनो निर्णयज्ञानस्य निर्णयज्ञानत्वादिना ज्ञानसंभवादवच्छेदकशास्त्रार्थस्य च संमुग्धज्ञानेन विषयीकरणात्। नहि संदेहप्रकारतयोपस्थितस्थाणुत्वस्य निर्णयाभावः स्वस्मिन्नानुभूयते। अथवा "मोदास्थाः, अस्मदुक्तं शास्त्रार्थं निर्णये"ति वक्तृवाक्याच्छास्त्रार्थनिर्णयोपस्थितिसंभवाच्च। तदभावः साक्षिणा कुतो नानुभूयते। युक्तं चैतत्। अन्यथा तवापि नित्यपरोक्षस्यानात्मनः शास्त्रार्थस्य धर्मादेर्भावरूपाज्ञानातिदूरत्वेन न जानामीत्यनुभवस्य निर्विषयत्वापातात्। अपिचार्थवदिदं शास्त्रत्वादित्यनुमानेन सामान्यतो ज्ञातशास्त्रार्थस्य शास्त्रजनितज्ञानत्वप्रत्यासत्त्या ज्ञातशास्त्रजनितज्ञानाभावविषयमिदमस्तु। अत एव त्वदुक्तमर्थं न जानामीति प्रतिब्रूते। उक्तितो न जानामीति हि तात्पर्यम्। यद्वा परोक्त्या सामान्यतो ज्ञाते शास्त्रार्थे विशिष्य ज्ञानाभावविषयोऽस्त्वयमनुभवः। नचवाच्यमवच्छेदकीभूतविशेषज्ञानाभावात्कथं तदवच्छिन्नज्ञानाभावज्ञानमिति। तत्रापि बहिरर्थतया साक्ष्यगोचरेण परोक्त्यबोधितेन शास्त्रार्थेनावच्छिन्नमज्ञानं कथं साक्षिणाऽनुभूयते। यदि च विशिष्याज्ञात एवासावर्थविशेषः परोक्त्या सामान्यतो ज्ञातत्वमात्रेणाज्ञानावच्छेदकः संस्तज्ज्ञानेऽनुभूयते। अज्ञानज्ञाने इयमेव गतिरिति। अन्यथा बहिरर्थस्य तस्य प्रमाणतो ज्ञानेऽज्ञानस्यैवासंभवादिति मतम्। तर्हि ममाप्यज्ञात एवासावर्थविशेषः समान्यज्ञातत्वमात्रेण प्रतियोगिभूतज्ञानावच्छेदकतया ज्ञानाभावज्ञाने ज्ञायतेऽन्यथा ज्ञानाभावस्यैवासंभवापातादिति समं समाधानम्। किंच परोदीरितवाक्यसंदर्भाच्छ्रोतुस्तदर्थज्ञानमुत्पन्नं नवा। नाद्यः। अज्ञाने ज्ञानविरोधित्वस्याप्यभावापातात्। शतशस्त्वया कथनेऽपि मम ज्ञानं नोत्पन्नमिति तदीयप्रतिवचनविरोधात्। तस्यैवार्थविशेषस्य व्यवहारप्रसङ्गात्। स्वरससुन्दरवाक्यादर्थबोधे सति जानामीत्येव व्यवहारदर्शनेनेहापि तथा प्रतिवचनप्रसङ्गाच्च। द्वितीयेऽपि कालान्तरभावितज्ज्ञानप्रागभावोऽसावनुभूयते नवा। नद्वितीयः। स्वमनसि स्थितज्ञानाभावस्य तस्यान्येनानुभवासंभवात्। स्वेनाप्यननुभवेऽप्रामाणिकत्वप्रसङ्गात्। कपाले घटो नोत्पन्न इतिवदुत्पत्तिप्रतियोगितया

ज्ञानप्रागभावैकविषयस्य ज्ञानं मम नोत्पन्नमिति व्यवहारस्य तज्ज्ञानाभावेऽयोगाच्च। नाद्यः। तज्ज्ञानाभावविषयतयैव त्वदुक्तमर्थं न जानामीत्यादिव्यवहारोपपत्तावसिद्धानुपपन्नभावरूपाज्ञानकल्पनायोगात्। नहि जातमबाधितं कार्यं कारणासंभवात्त्यज्यते। प्रत्युत संभावितयावत्कारणजन्यमेवाङ्गीकार्यम्। इतरथोपादानकारणासंभवेन प्रध्वंसस्यापि प्रध्वंसप्रसङ्गः। तस्मादत्रापि न किंचिदनुपपन्नम्। किंच (वि. पु. १०५ प. २) * विषयैः सह साक्षिचैतन्येऽज्ञानाध्यासादि * ति त्वयैव वक्ष्यमाणत्वात्। तव मते सर्वसंप्रतिपन्नघटादिविषयो नायमनुभवः। अपितु त्वन्मात्राभिमतसाक्षिचैतन्याध्यस्तघटादिविषय एव। स चास्माकमसंप्रतिपन्न एवेति त्वत्प्रक्रियापरशुनैव प्रत्यक्षतरोर्द्वैधीभावकरणात्। किं मां प्रति भावरूपाज्ञाने प्रमाणीक्रियते। नह्यसिद्धमसिद्धेन साधयितुं केनापि शक्यते। अपिच तदप्यज्ञानं तादृशेनापि घटेन सहैवानुभूयते। नतु तद्विषयकमिति तवैव राद्धान्तरहस्यम्। (पं. पु. १०६ प. २) * साच न जडेषु वस्तुषु तत्स्वरूपावभासं प्रतिबध्नाती * त्यादिपञ्चपादिकावाक्यादुक्तविवरणवाक्यसंदर्भात्। "आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवला। पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचर"इत्यादि ×त्वदीयवाक्याच्च। कथं तर्हि +ज्ञानस्य स्वविषयैः सह साक्षिण्यध्यासादित्यध्यस्तघटपटादीनामपि स्वविषयैरित्यज्ञानविषयत्वाङ्गीकार इति चेत्सत्यम्। पूर्वोत्तरविरोधाख्यत्रगान्तरसंपादनायैवेति ब्रूमः। एवंच सति विषयताद्योतकविभक्त्यन्तघटपटानुस्यूतव्यवहारजनकोऽयमनुभवोऽस्मदुक्तविधया ज्ञानाभावविषयतयैव समाधेयः। नहि सुखेन स्वहस्तस्थितगन्धज्ञानं सुखविषयं यःकोऽपि व्यवहरति। "तस्माच्चैतन्यातिरिक्तं किंचिदपि नाज्ञानविषय"इत्यात्मनोन्यत्र व्यवह्रियमाणाज्ञानप्रत्यक्षं त्वयैवोन्मूलितम्। एवंच व्यसनार्णवे निमग्नस्य तव मामहं न जानामीति शिखामात्रमुर्वरितम्। तदपि प्रतिबन्दीतरङ्गैर्निमज्जितमेव। साक्षिणापि ज्ञायमानसुखादौ न जानामीति व्यवहारदर्शनेन ज्ञायमानेऽहमाद्यंशे नायं व्यवहारः। किंतु शास्त्रत आनन्दादिरूपवत्तया ज्ञातं मामहं तथा न मनआदिना पश्यामीत्यर्थसंभवाख्यस्रोतोवेगेनोच्छ्रसितं त्वदुक्त-

×त्वदीयमिति संक्षेपशारीरके अध्या. १ श्लो. ३१९.

+विषयैः सहेत्यादि (वि. पु. १०५ प. २) विवरणार्थानुवादोयम्।

निर्बन्धबन्धं पुनरप्यनुपदं स्वत्प्रक्रियाभारेणैवानुन्मज्जनं निमज्जयिष्यामः। मुण्डित-शिरस्कस्य तव तावदियं शिखैवानुपपन्ना। तथाहि। "तान्यहं वेद सर्वाणि" "आत्मानमन्यं च स वेद विद्वान्" "वेदाहं समतीतानि वर्तमानानि चानघ" "यः सर्वज्ञ" इत्यादिवचनैस्तव मते मूलाविद्याश्रयविषयत्वेनाभिमतस्य परब्रह्मणोऽहमज्ञ-इत्यादिरूपो नायमनुभवः। अतो मूलाविद्यायां नेदं प्रत्यक्षम्। नापि जीवाश्रिततूला-विद्यायाम्। "मामहं जानामि" "ममेदं गृहं" "ममेमे कलत्रपुत्रादयो न तवे"त्येव पशुपक्ष्यादिसाधारण्येनानुभवसद्भावेन "मामहं न जानामी"त्यादेः क्वाप्यननुभवात्। "अहमज्ञ" इत्यपि न सर्वथा ज्ञानाभावाद्व्यवहारः। उक्तरीत्या बहुतरज्ञानसद्भावात्। "एतावन्तं कालं सुखमहमस्वाप्समि"ति परामर्शसिद्धकालसुखस्वरूपज्ञानादेः सुषुप्ता-वपि सद्भावाच्च। अपितु निष्किंचनोऽहमितिवद्बहुतरशास्त्रोक्ततत्वापरोक्षज्ञानस्य विद्वत्सु विद्यमानतया ज्ञातस्य स्वस्मिन्नभावादेव। अत्र च न काप्यनुपपत्तिः। अपिच तव मतेऽपि साक्षिणा ज्ञायमाने सुखादौ न जानामीति व्यवहारादर्शनाज्ज्ञायमानेऽ हमाद्यंश एवाज्ञ इति नायमज्ञानानुभवः। येन ज्ञानाविरोध्यज्ञानं सिद्ध्येत्। किंत्व-ज्ञातांश एव। एवंचाज्ञानेऽवच्छेदकाज्ञानमुभयत्र समाधेयम्। यदिचान्यत्रावच्छे-दकज्ञानावश्यंभावेऽप्यज्ञाने विरोधादेव न तदपेक्षा तमोग्रहण आलोकापेक्षाव-दिति मतम्। तदा किमपराद्धं ज्ञानाभावरूपाज्ञानेन। किंच (त.पु.१०७प.१८) * यदावृतं तन्न भाति। यच्च भाति न तदावृतम् * इति (त पु. ११२ प. २९) * आवरणाभावे नित्यमुक्तत्वप्रसङ्गात्तदेष्टव्यमिति समाधत्ते * इति च तत्वदीपने वक्ष्यमाणत्वात् (पं. पु. १२१ प. २) * सा प्रत्यक्चिति ब्रह्मस्वरूपावभासं प्रतिबध्नाति * इति पञ्चपादिकावचनेन चाननुभूयमानाद्वैतानन्दादिविषयकमेवाज्ञानं वाच्यम्। नत्वहमित्युल्लिख्यमानस्वरूपमात्रविषयकम्। तथाचाज्ञानावच्छेदका-द्वैतानन्दादेरिदानीमज्ञातत्वात्कथं तदवच्छिन्नाज्ञानज्ञानम्। एतेन मां न जानामी-त्यत्रानुपपत्तिरुक्ता वेदितव्या। अहमर्थस्य ज्ञातत्वादन्यस्य चावच्छेदकस्यानुल्लि-ख्यमानत्वात्। एवंच ज्ञानाभावरूपाज्ञानवादिना किमपराद्धम्। अवच्छेदकीभूत-प्रतियोग्यज्ञानस्य त्वद्रीत्यैव तेनापि वक्तुं शक्यत्वात्। किंचास्माकं शास्त्रतो ज्ञात-स्यानन्दादेरपरोक्षतो ज्ञानाभावपरतया मां न जानामीत्यस्योपपन्नतरत्वान्न काचि-

द्वनुपपत्तिः । तद्विषयीकरणयोग्यस्य साक्षिणस्सत्त्वेऽपि फलोपहितस्य तस्याभावात् । तादृशमानसप्रत्यक्षाभावविषयो वा । भवदभिमताज्ञानस्याप्यपरोक्षवृत्तिमात्रविरोधित्वाङ्गीकाराच्च जानामीत्यत्र ज्ञानसामान्यवाचकपदं तद्विशेषापरोक्षनिष्ठं त्वयाऽप्येष्टव्यमिति सर्वमवदातम् । यदि च सामान्यतोऽहमित्यात्मज्ञानमात्रेणाज्ञाततद्विशेषानन्दाद्यवच्छिन्नाज्ञानज्ञानमिति ब्रूषे । मयाऽपि कुतो न तथा वक्तव्यम् । युक्तमेतत्सविशेषब्रह्मवादिनो ममैव । निर्विशेषब्रह्मवादिनस्तवेयं प्रक्रिया विक्रियैव । अपिच घटमहं न जानामीत्यत्राज्ञानावच्छेदकघटाद्यनुभवो न तावत्साक्षिणा । बहिरर्थत्वात्तेषाम् । नापि प्रमाणज्ञानेन । अज्ञानस्यैव निवृत्त्यापत्तेः । यदत्रोक्तं विवरणे (वि. पु. ९९ प. ५) * सर्वं वस्तु ज्ञाततया वाऽज्ञाततया वा साक्षिचैतन्यस्य विषय एव । तत्र ज्ञाततया विषयः प्रमाणव्यवधानमपेक्षते । अन्यस्तु सामान्याकारेण विशेषाकारेण वाऽज्ञानव्यावर्तकतया सदा भासते * इति । तन्न । (वि. पु. १०२ प. २) * विषयैस्सह साक्षिचैतन्येऽज्ञानाध्यासात् * इति वक्ष्यमाणप्रक्रियाविरोधात् । किंचाज्ञाततया विषयोऽपि प्रमाणव्यवधानं कुतो नापेक्षते । प्रमाणव्यवधाने ज्ञाततायाः एवापत्त्याऽज्ञातताभङ्गप्रसङ्गादिति यदि तर्हि ममापि घटमहं जानामीति ज्ञाततया साक्षिविषयो घटः प्रमाणव्यवधानमपेक्षते । न जानामीति ज्ञानाभावाख्याज्ञाततया साक्षिविषयस्तु न तदपेक्षते । तथासति प्रमाणेन तज्ज्ञानस्यैवोत्पादिततया ज्ञानाभावरूपाज्ञानस्यैव भङ्गप्रसङ्गादिति समम् । ननु यथा ममाज्ञानं गृह्णता साक्षिणा विशेषोऽप्युल्लिख्यतेऽविरोधात् । तव तु न तदा तदुल्लेखो विरोधादिति चेत् । न । बहिरर्थस्य तस्य साक्षिण्युल्लेखे तवापि विरोधसाम्यात् । यदत्रोक्तं तत्त्वदीपने । (त. पु. १०० प. १२) * केवलपरमाणोर्मानसप्रत्यक्षत्वभावेऽपि परमाणुमहं न जानामीति ज्ञानविशेषणतया प्रत्यक्षविषयत्वोपगमात् * इति । तदपि न । "ज्ञानस्यार्थप्रकाशनशीलस्य विरोधादि"ति(?)तत्त्वदीपनोक्त्या तदुपस्थापकत्वेऽप्यज्ञानस्यार्थानवभासहेतोस्तमसैव तदुपस्थापकत्वायोगात् । नहीच्छादिकमपि स्वविषयादेरुपस्थापकम् । "यदावृतं तन्न भाती"ति स्वोक्तिविरोधाच्च । कथं तर्हि तस्योल्लेख इति चेन्न । को ब्रूते तस्योल्लेख इति । किंतु ज्ञानसामान्याकारेणैवोल्लेखो नतु विशेषस्य विशिष्य विशिष्योल्लेखः । तथासति सर्वसार्वज्ञ्यस्यानुपदमेव वक्ष्यमाणत्वात् ।

यच्चोक्तं (वि. पु. ९९ प. ६) * सर्वं वस्तु ज्ञाततया वाऽज्ञाततया वा साक्षिचैतन्यस्य विषयो भवति । तत्र ज्ञाततया विषयः प्रमाणव्यवधानमपेक्षते । अन्यस्तु सामान्याकारेण विशेषाकारेण वाऽज्ञानव्यावर्तकतया सदा भासते * इति । तदपि तुच्छम् । एवं सति ब्रह्माण्डान्तर्गतसकलपदार्थानां विशिष्यैवाज्ञानावच्छेदकतया घटादिवदुल्लेखप्रसङ्गात् । तथाच महदिदमागमकौशलं परस्य यदज्ञानं साधयता दुश्चरतपोभिरपि दुस्साधं सार्वज्ञमेव प्रसाधितमिति । अस्माकं तु यत्र नाज्ञानं सामान्याकारे तेनैवोल्लेखनं नतु विशिष्येत्युक्तत्वान्न सार्वज्ञम् । तव तु "विशेषाकारेण वे"त्युक्तत्वात् । (त.पु.९९प.२३) * अज्ञानमित्यप्रतीतेः * इति तत्वदीपनोक्तेश्च कथं न सर्वसार्वज्ञम् । यच्च स्वरूपज्ञानाविरोध्यज्ञानमुक्तं तदपि न । एवं सति मोक्षदशायामिवेदानीमप्यानन्दादेरनुभवप्रसङ्गात् । अनुभूयत एवेति चेन्न । (त. पु. ११२ प. २९) * आवरणाभावे नित्यमुक्तत्वप्रसङ्गात्तदेष्टव्यमिति समाधत्ते * इति तत्वदीपनविरोधात् । कशाताडनेऽपि सुखताडनासंभवप्रसङ्गात् । नच बाह्यदुःखवशात्तदिति वाच्यम् । अनवच्छिन्नानन्दार्णवे मग्नस्य बाह्याल्पदुःखानलकणेन क्रियायोगात् । ज्ञायमानेऽपि सुखादौ न जानामीति व्यवहारापाताच्च । "यदावृतं तन्न भाती"त्यादिस्ववचनविरोधाच्च । तस्माद्भावरूपाज्ञाने न प्रत्यक्षं मानम् । अपितु तादृशमज्ञानं वदतस्तवैव सर्वजनसिद्धैतादृशप्रक्रियापरिज्ञानाभावेऽनुपयुक्तं च विपरीतं कल्पयतो भावरूपमिथ्याज्ञाने वा भवति भवतः साक्षी प्रमाणम् । यच्चोक्तं (वि. पु. १०० प. ४) * अनुमानमपि, विवादगोचरापन्नं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्त-स्वविषयावरण-स्वनिवर्त्य-स्वदेशगत-वस्त्वंतरपूर्वकं भवितुमर्हति अप्रकाशितार्थप्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावत् * इति । तत्रसाध्यस्थितविशेषणपञ्चकस्य प्रागभावोत्तरज्ञाननिवर्त्यपूर्वज्ञानप्रतिबन्धकादृष्टाज्ञातता मिथ्याज्ञानानि क्रमेण व्यावर्त्यानीत्युक्तं तत्वदीपने× । तदपि न युक्तमिवाभाति । मिथ्याज्ञानस्य तत्वज्ञाना-

---

×(त. पु. १०१ प. २४) प्रागभावव्यावृत्त्यर्थं "स्वप्रागभावे"ति । उत्तरज्ञाननिवर्त्यपूर्वज्ञानव्यावृत्त्यर्थं "स्वविषयावरणे"ति । अदृष्टादिकं व्यावर्तयति "स्वनिवर्त्ये"ति । विषयगताज्ञातताव्यावृत्त्यर्थं "स्वदेशगते"ति । मिथ्याज्ञानं व्यावर्तयति "वस्त्वंतरे"ति इति तत्वदीपनवाक्यानि ।

न्यत्वेन ततो वस्त्वंतरतया तत्पदव्यावर्त्यत्वायोगात् । यदिचान्यद्वस्तु वस्त्वंतरम् । भ्रमज्ञानं च न वस्तु मिथ्यात्वादिति वदेत् । तदा साध्यमानाज्ञानस्यापि मिथ्यात्वाद्बाधः । अन्तरपदवैयर्थ्यं च । यदिच ज्ञानत्वानधिकरणं वस्तु वस्त्वंतरं भ्रमश्च नैतादृश इति ततो व्यावृत्तिरिति वदेत् । तर्हि तत एवोत्तरज्ञाननिवर्त्यपूर्वज्ञानस्यापि व्यावृत्तेः स्वविषयावरणपदवैयर्थ्यप्रसङ्गात् । वस्त्वंतरपदपरित्यागे च मिथ्याज्ञाने नैवार्थान्तरत्वापातात् । यदिचोत्पादकादृष्टव्यावृत्त्यर्थं स्वविषयावरणपदं तच्च वस्त्वंतरं भवत्येवेति कथं स्वविषयावरणपदवैयर्थ्यमिति ब्रूयात् । तर्ह्यभावरूपस्य ज्ञानजननानुकूलतया स्वविषयानावरणस्य प्रागभावस्यापि तत एव व्यावृत्तिसंभवादाद्यं विशेषणं व्यर्थम् । नह्यसौ ज्ञानोत्पत्तिप्रतिबन्धकः कारणत्वात् । यदिच ज्ञानासमानकालीनत्वेनावरणत्वोपचारः प्रागभावे तर्हि तादृशोत्पादकादृष्टेनैवार्थान्तरम् । किंचाज्ञानस्य चिन्मात्राश्रितत्वेन प्रमाणवृत्तेश्चान्तःकरणनिष्ठत्वेन स्वदेशगतत्वाभावाद्बाधः । तत्पदत्यागे कथंचित्स्वदेशगतत्वाङ्गीकारे चाज्ञाततयैवार्थान्तरम् । अपिच त्वन्मतेऽज्ञानाश्रयचित एवाज्ञानविषयतयाऽज्ञानविषयवृत्तिधर्मविशेषस्याज्ञातत्वस्यापि तदाश्रितत्वावश्यंभावेन बाधार्थान्तरयोरनिवारणाच्च । तस्मादेतादृशसाध्योपादानमसाध्यसाधनम् । हेतौ च प्रकाशकर्तृत्वकरणत्वपक्षोक्तासिद्धिसाधनवैकल्याख्यदोषभिया यदुक्तं तत्वदीपने । (त. पु. १०२ प. ३१) * अप्रकाशितव्यवहारहेतुत्वं हेत्वर्थः * इति । तत्र वक्तव्यम् । व्यवहारसाधारणकारणत्वमुतासाधारणकारणत्वं वेति । नाद्यः । अदृष्टादौ व्यभिचारात् । न द्वितीयः । व्यवहारासाधारणहेतुज्ञानकारणप्रदीपप्रभायां साधनवैकल्यात् । परंपराहेतोरहेतुत्वाच्च । ताल्वोष्ठपुटव्यापारे व्यभिचाराच्च । ज्ञानत्वेन विशेषणे परोक्षज्ञाने व्यभिचारात् । साधनवैकल्याच्च । अपरोक्षव्यवहारहेतुत्वाभिप्राये च पूर्ववदेव विकल्पदूषणे द्रष्टव्ये । ज्ञानत्वेन विशेषणे च साधनवैकल्यमेव । अतएव प्रकाशत्वेन विशेषणमप्यपास्तम् । ज्ञानत्वतेजस्त्वपुरस्कारेण प्रवृत्तप्रकाशशब्दस्य नानार्थकत्वेनासिद्धेः । साधनवैकल्याच्च । अन्यथा गोत्वेन पृथिव्या अपि शृङ्गित्वसाधनप्रसङ्गात् । तस्माद्धेतुरप्ययमनर्थहेतुरेव । यच्च (वि. पु. १०४ प. ३) * नतावदवगते नीलार्थे तत्रावरणकृत्यमधिगन्तुं शक्यते । अनवगते तु नतराम् * इत्यावरणखण्डनं

विवरणे। तदपि वृथा स्ववाग्दण्डनमेव। परोक्षतया ज्ञातवस्तुनोऽपरोक्षप्रतिबन्धकतदा-वरणस्यापरोक्षप्रतिबन्धाख्यावरणकृत्यस्य च सुवचत्वात्। सुज्ञेयत्वाच्च। त्वयाऽप्येव-मधिष्ठानाधिगमानधिगमाभ्यां विक्षेपानुपपत्तिमाशंक्य (त. पु. ११० प. २६) * अधिष्ठानसामान्याकारसंघटिततया रूपान्तरं भ्रांत्याऽधिगम्यते। तद्विशेषबोधस्य भ्रम-विरोधित्वात् * इति समाधानस्य वक्ष्यमाणत्वाच्च। अन्यथा (त. पु. ११३ प. १८) * सन्निहितेऽप्यर्थे कुड्यादिनाऽऽवृते प्रकाशत इति व्यवहाराभावः * इति (त. पु. १२१ प. २९) * कुड्यादेरपि व्यवधायकत्वदर्शनात्कथमज्ञानमेव व्यवधायकम्। * इति च तत्वदीपने वक्ष्यमाणकुड्याद्यावरणमप्येवं गेहान्तस्थघटादेरनावरणं स्यादित्यान्तरं सर्वं सर्वस्वं चोरैरपह्रियेत। शुना वा स्पृश्येत। अधिगमानधि-गमाभ्यामत्राप्यावरणखण्डनस्य सुकरत्वात्। दाहोपयुक्तदहनसामर्थ्यकुण्ठकमण्या-देरिव ज्ञानोपयुक्तार्थसन्निकर्षविघटककुड्यादेरावरणत्वावश्यंभावाच्च। किंचैतादृश-शास्त्रप्रणेतुः परमहंसस्य तत्र परिजनस्त्रीकुचकंचुकादिरप्यधिगमानधिगमाभ्यामा-वरणदशायामेवानावरणमिति विवृतस्तनी सा धुनांमेव लज्जया प्रविशेत्। नचेद्वि-गताभिमानैः शिष्यजनैस्सह स्वमेव वनं प्रपद्यस्व। विपद्यतां वा शास्त्रमिदम्। नायनरश्मिप्रतिबन्धकतया कुड्यादिकमावरणमेवेति चेन्नेति को ब्रूते। नहि वयमा-वरणमेव नास्तीति ब्रूमोऽपितु जात्युत्तरपरायणस्य तवेदमधिगमानधिगमाभ्यामावरण-निवारणं न विद्वन्मनस्तोषणमतोऽसारस्ते शास्त्रप्रचार इति। यच्च ×प्रमाणवैकल्या-दनात्मनोऽप्रकाशस्य स्वत एव सिद्धतयाऽर्थानुपपत्तेर्न पटादावावरणमिति मतम्। तदपि न। आत्मनोऽपि तत एवावरणाभावप्रसङ्गात्। नित्यप्रकाशरूपस्यात्मनः सदा प्रकाशप्रसक्तेर्नैवमिति चेत्। किं तावता। नह्यज्ञानमावरणं तं प्रकाशं निरु-णद्धि। अविरोधाङ्गीकारात्। नह्युलूकनयनप्रकाशमन्धकारो निरुंधे। विरोधे चा-ज्ञानावच्छेदकाद्वैतानन्दादिज्ञानोपायाभावात्तदवच्छिन्नाज्ञानज्ञानमेव न स्यादिति ज्ञातैकसदज्ञानस्याप्यभावप्रसङ्गात्। किंच (वि. पु. १११ प. ३) * न तावदावरणं प्रकाशविलोपः स्वरूपस्यानपायात्। नापि सत एव प्रकाशस्य कार्यप्रतिबन्धः।

---

×(पं. पु. १०६ म. २) * सा च न जडेषु वस्तुषु तत्स्वरूपावभासं प्रतिबध्नाति। प्रमाणवैकल्यादेव तदग्रहणसिद्धेः * इत्यादेरर्थानुवादोऽयम्।

ज्ञानस्य विषयावभासात्मनोदितस्य स्वकार्ये प्रतिबन्धप्रतीक्षयोरभावात् * इति विवरण एव वक्ष्यमाणत्वात् स्वरूपप्रकाशस्याज्ञानमावरणमिति रिक्तं वचः । नहि घट इव पटोऽपि प्रदीपप्रकाशस्याऽऽवरणमुच्यते । न वा प्रतिनयनं नयनप्रकाशस्य । कथं तर्ह्यस्ति प्रकाशत इति व्यवहारपुष्कलकारणे सति असति च प्रतिबन्धके नास्ति न प्रकाशत इति व्यवहार इति चेत् । प्रतिबन्धकत्वेनाभिमतस्याज्ञानस्यापि किंचिद्विघटकत्वाभावेन कथंचित्कुड्याद्यावृतघटेऽपि ज्ञानाभावसंपादनेनैव तादृशव्यवहारदर्शनात् । स्वरूपप्रकाशेनैव सुखाद्यवभासे सति तादृशव्यवहारादर्शनाच्च । किंचैकस्यैव कर्तृकर्मभावविरोधभिया चितः चिदविषयत्वाङ्गीकारिणस्तत्र मनेऽद्वैतानन्दादिविषयकस्य तदस्तितादिव्यवहारकारणस्य ज्ञानस्यैवाभावादस्तु विपरीतव्यवहारः । किं तत्र प्रतिबन्धकाज्ञानकल्पनया । नहि तदविषयकं ज्ञानं तद्व्यवहारहेतुः । पटाविषयकज्ञानेन पटव्यवहारादर्शनात् । स्वप्रकाशत्वात्स्वव्यवहारजनकं स्वरूपज्ञानमिति चेन्न । तव मते चिदवेद्यत्वस्यैव स्वप्रकाशत्वेनोक्तविधया स्वव्यवहारहेतुत्वासंभवादेव । नहि तदविषयकं ज्ञानं तद्व्यवहारहेतुरिति घटनेऽतिप्रसङ्गात् । नच ज्ञानस्वरूपत्वात्स्वविषयस्यापि चितः स्वव्यवहारजनकत्वम् । ज्ञानस्वरूपस्यापि घटज्ञानस्य स्वविषयीभूतघटव्यवहारमात्रजनकत्वदर्शनेन स्वविषये स्वस्मिन्व्यवहारजनकत्वादर्शनात् । कथं तर्हि भवतामपि स्वव्यवहारस्साक्षिणेति चेन्न । अस्माभिस्स्वविषयप्रकाशत्वस्यैव स्वप्रकाशत्वाङ्गीकारेण स्वविषयसाक्षिणस्स्वव्यवहारजनकत्वसंभवात् । नहि स्वप्रकाशशब्दस्य स्वाप्रकाशत्वमर्थो विरोधात् । त्वयाऽपि ज्ञानस्य सतस्साक्षिणः स्वव्यहारजनकत्वमभिलपता स्वविषयप्रकाशत्वमेव स्वप्रकाशत्वमङ्गीकार्यम् । अन्यथाऽवेद्यत्वे सतीत्यादिलक्षणस्यैव पूर्वोत्तरविरुद्धविशेषणग्रस्ततयाऽसंभवप्रसङ्गात् । नच वाच्यमेकस्यैव क्रियाकर्मभावे विरोधसाम्यमिति । क्रियासाधकतमस्य करणत्ववत् क्रियास्वातंत्र्यस्य करणादीनामपि प्रयोजकत्वरूपस्य कर्तृत्ववच्च लाघवेन क्रियाफलशालित्वस्यैव कर्मत्वरूपतया क्रियाफलस्य च व्यवहारस्यापरोक्षव्यवहारयोग्यत्वं वदता त्वयाऽप्यङ्गीकृतत्वेन विरोधस्यैवाभावात् । किंच (वि. पु. १०६ प. ४) * किंत्वन्यदेवात्मन्यतिशयकार्यं कृत्वा तद्विषयमज्ञानम् * इति (वि. पु. १०४ प. २) * येन यस्यातिशय उत्पद्यते स तस्य विषयः * इति

च विवरणे त्वयैवोक्तविषयत्वस्य स्वापरोक्षव्यवहारजनके चैतन्ये त्वद्रीत्यैव संभवेन विरोधाभावाच्च । कथमन्यथा "सुखमहमनुभवामि" "द्रष्टृदृष्ट"रित्यादौ कर्तृत्वं क्रियात्वं "मामहं न जानामि" "मामहं व्यवहरामीत"यादौ कर्तृत्वं कर्मत्वं चैकस्य । परसमवेतक्रियाफलशालित्वं कर्मत्वमिति तु त्वयैव न वक्तुं शक्यम् । येन स्वविषयत्वं भज्येत । स्वसमवेताज्ञानापरोक्षजन्यव्यवहारादिविषय आत्मनि त्वद्रीत्यैवाव्यापनात् । एवं सत्यंतिमचरणसंयोगाश्रये चरणेऽपि ग्राम इव कर्मत्वप्रसङ्ग इति चेन्न । अनुद्देश्यतया तत्र फलत्वस्यैवाभावात् । किंतूद्देश्यग्रामस्थधनधान्यकंबलादिप्राप्तेरेव फलत्वात् । अन्यथा प्रतिपदं चरणसंयोगाश्रये तत्तत्प्रदेशे परसमवेतेतिविशेषणदानेऽप्यतिप्रसङ्गतादवस्थ्यात् । त्वद्रीत्योक्ताव्यापनतादवस्थ्याच्च । एतेन चिद्विषयत्वं फलव्याप्यत्वं दृश्यत्वमित्यपि परास्तम् । उक्तयुक्त्या चितोऽपि चिद्विषयत्वावश्यंभावेनात्मन्येव व्यभिचारात् । मद्रीत्या स्पष्टं व्यभिचाराच्च । प्रत्यक्त्वं विषयित्वं पराक्त्वं च विषयत्वं तत्कथमेकस्यैवेति चेन्न । त्वन्मत एकस्यैव मुखस्य बिंबप्रतिबिंबभावे प्रत्यक्पराग्भावदर्शनेन तयोरप्यविरोधात् । पराग्वृत्तिं प्रति प्रत्यगात्मनोऽपि विषयत्वेन विषयविषयिभावानालिङ्गितयोर्मुखप्रतिबिंबयोरपि त्वदुक्तप्रत्यक्त्वपराक्त्वसत्त्वेन क्रियाफलशालित्वस्यैव विषयत्वावश्यंभावाच्च । एवंच सति "स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तमे"त्यादिप्रमाणवचनान्यपि समाहितानि भवन्ति । अपि च"तावन्तं कालं सुखमहमनुभवन्नस्वाप्समि"ति सार्वजनीनपरामर्शसिद्धसौषुप्तिकानुभवे स्वरूपसुखस्यैव कर्मत्वदर्शनेन क्रियाकर्मभावस्याप्येकत्वेत्रोपपत्तेश्च । एतेन परोदीरितस्वप्रकाशतावादोऽपि प्रत्युक्त इति द्रष्टव्यम् । किंचैवं चितः चिदविषयत्वाङ्गीकारात् । स्वरूपज्ञाने स्वोल्लेखस्यैवाप्रसक्त्या किं तत्र प्रतिबन्धकाज्ञानकल्पनया । तद्विषयकज्ञानाभावेनैव तद्व्यवहारस्य विपरीतव्यवहारस्य च संभवात् । नह्यन्धस्य घटानवभासनादिकं कुड्यप्रतिबन्धायत्तम् । नचा घटज्ञानस्य घटानवभासनादिकं किंचित्प्रतिबन्धाधीनमित्यज्ञानस्यैवासिद्धिप्रसङ्गात् । जगदुपादानतया तत्सिद्धिरिति चेत् । न । घटतदवयवादिरूपजगतः स्वस्वावयवपरंपरामात्रोपादानकत्वेनोपादानान्तरानपेक्षणात् । अनवस्थायाश्च कस्यचिदावश्यकानादित्वाश्रयणेनापि परिहारसंभवात् । शुक्तिरूप्यादेरुपादानासंभवः । कथंचितन्मात्रसिद्धा-

त्वपि जगदुपादानत्वाभिमतमूलाज्ञानस्य निर्मूलत्वापातादेव । स्वरूपावरकाज्ञानाभावेऽनवच्छिन्नानन्दादेरिदानीमप्यनुभवप्रसङ्गान्नित्यमुक्तत्वमिति चेन्न । चिदात्मकानवच्छिन्नानन्दादेरुक्तविधया स्वरूपज्ञानेऽनवभासादेवास्तु नित्यमुक्तत्वाभावः । न ह्यानन्दरूपतामात्रेण नित्यमुक्तत्वम् । प्रतिबन्धशतेनाप्यपरिहार्यत्वात् । किंतु तद्विषयकानुभवे सत्येव । स चोक्तविधया कदापि नास्त्येवेति "वृद्धिमिच्छतो मूलमपि नष्ट"मिति न्यायेन नित्यमुक्तत्वमापादयतो मुक्तत्वमेव गतम् । आनावृतानन्दाविषयकज्ञानरूपस्यैवानन्दरूपतामात्रेण मुक्तत्वे आवरकाभिमताज्ञाने सत्यपीदानीमनावृताहमादिज्ञानरूपस्यैवात्मन आनन्दरूपताया अपि सद्भावात्पुनर्नित्यमुक्तत्वमेव स्यादिति निर्मर्यादं परकीयशास्त्रमापद्येत । नहि सुखरूपतामात्रं कस्याप्युद्देश्यम् । मनःपरिणामसुखरूपतया: केनाप्यनपेक्ष्यमाणत्वात् । किंतु तद्विषयकानुभव एव । स च परमते कदापि नास्त्येवेति कथं मुक्तत्वम् । चितो भ्रमकल्पितबाह्यार्थविषयीकरणयोग्यत्वेऽपि न तत्र प्रतिबन्धकमज्ञानम् । किंतु विक्षेपशक्तिमत्त्वात्तदनुकूलमेव । नवा तत्र नास्तितादेर्व्यवहारः विद्यमानोऽप्यज्ञानान्यकुड्यादिप्रतिबन्धकप्रयुक्त एव । चरमवृत्त्यभावोऽपि स्वकारणाभावप्रयुक्त एवेति कुतस्त्वदभिमताज्ञाने प्रत्याशा । नहि चरमवृत्तेरपि प्रतिबन्धकमज्ञानम् । कदाप्यनिवृत्तिप्रसङ्गात् । किंच नित्यसुखरूपत्वमात्रस्य फलत्वे संसारस्य कुतो न मुक्तित्वम् । आवृतत्वान्न तत्फलं चेत् । किं तदावरणं तूष्णीमावरणं उत सुखविषयज्ञानप्रतिबन्धकम् । न द्वितीयः । स्वरूपभूतसुखे स्वरूपभूतज्ञानस्य विषयविषयिभावानङ्गीकारात् । "ज्ञानस्य विषयावभासात्मनोदितस्य स्वकार्ये प्रतिबन्धप्रतीक्षयोरभावादि"ति त्वयैवानङ्गीकाराच्च । सुखानुभवाप्रतिबन्धककेवलदेहाद्यावृतचित्तान्तस्थसुखस्य फलत्वदर्शनेनोक्तस्येदानीं मुक्तत्वाख्यदूषणास्यापरिहारात् । एतेनैव सुखज्ञानस्यावृतत्वान्नेदानीं मुक्तिरित्यपि निरस्तम् । विवरणोक्तरीत्या ज्ञानविलोपस्य ज्ञानकार्यविलोपस्य चानङ्गीकारेण त्वन्मते स्वविषयत्वाभावेन विषयविषयिभावाख्यज्ञानकार्यविलोपसंभवेन चात्रापि द्वितीयपक्षोक्तदूषणापरिहारात् । केवलाद्यावृतचित्तान्तस्थसुखज्ञानस्य फलत्वदर्शनेन प्रथमपक्षस्याप्ययोगात् । उक्तविधयाऽऽनन्दाविषयकज्ञानानावरणस्यानावृताहमंशज्ञानसद्भावमात्रेणापि संभवेनेदानींमुक्तेरपरिहाराच्च । स्वाघटितघटकशक्त्याऽ

संभावितमपि संसारं संभावयन्ती भवदविद्या स्वास्तमयाख्यं मोक्षमपहायेदानीमसंभावितं स्वसमानकालीनं मोक्षमेव कुतो न संभावयेत् । येन स्वयमपि जीवेत्त्वमपि नित्यमुक्तो भवेः । नहि महासमर्था स्वनाशमनुकूलयेत् । अतस्त्वदपेक्षितफलसाधिका विपरीतफलसाधिका च नेयमविद्या विद्यारूपे ब्रह्मणि कल्प्या । अपिच कश्चायं व्यवहारोऽनुपपन्नः किं जीवचैतन्यधर्मिकस्तद्विषय एव उत तद्धर्मिको ब्रह्मविषयः आहोस्विद्ब्रह्मधर्मिको ब्रह्मविषय एव । नाद्यः । अहमिति जानामीत्येव जीवस्य व्यवहारदर्शनेनापादकासिद्धेः । तस्यैवानवच्छिन्नाद्वैतानन्दादौ नास्तीत्यादिव्यवहारात्तत्रावरणकल्पनं चेत् । शशशृङ्गेऽपि तत एव कुतो न कल्प्यते । तत्रा-स्त्येवेति चेत् । इदं किमस्ति । "यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान्"इति परब्रह्मण एव तादृशानन्दश्रवणात् । जीवानन्दस्य तु "स एको मानुष आनन्द"इत्यादिना तत्रैव मितिकथनात् । अन्ततश्चतुर्मुखस्यापि शतानन्दत्वात् । नच वाच्यमयमानन्दो बाह्य एव । स्वरूपसुखं पुनरनवच्छिन्नमिति । तत्र प्रमाणाभावात् । "आनन्दो ब्रह्मेति व्यजानात् । यदेष आकाश आनन्दो न स्यादि"त्यादिना स्वरूपानन्दप्रकरणत्वात् । "यतो वाचो निवर्तन्त" इत्युक्त्याऽनवच्छिन्नपरमेश्वरस्वरूपानन्दप्रकरणत्वात् । बहिर्मानुषाणां बहुतरदुःखसिंधुसंधिसंभवदस्थिरतरसुखबुद्बुदमात्रभुजां "तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यादि"त्युक्तमहासुखासंभवाच्च । कः पुनरस्य संबन्ध इति चेत् । न । इदानीमननुभूयमानमानुषस्वरूपानन्दस्य बुद्ध्यावारोहाय निदर्शनतया तस्योक्तत्वात् । एवंचोक्तरीत्या स्वरूपानन्दस्यैव वैचित्र्येण मुक्तावप्यनुवर्तमानपारमार्थिकभेदस्यापि तत एव सिद्ध्या त्वदभिमताद्वैतविषतरोरपि समूलघातं भग्नत्वाच्च । न ह्यविद्यमानं देवत्वमात्मन्यङ्गीकृत्य तदुपपादकतयाऽसंभावितामृतभोजनं कल्पयन्तः प्रेक्षावन्तो दृश्यन्ते । अल्पस्यापि स्वरूपसुखस्य कुतो नास्तीति व्यवहार इति चेन्न । एतावन्तं कालं सुखमहमस्वाप्समित्यस्तित्वेनैव तस्य व्यवहारदर्शनात् । जाग्रदवस्थायामपि कुतो न तद्व्यवहार इति चेत् । तर्हि मास्तु तत्रात्पमपि स्वरूपसुखम् । अयोग्यानां दुःखैकरूपत्वात् । सौषुप्तिकसुखपरामर्शस्तु दुःखाभावविषय एवास्तु । कुतो बलादग्निं गृहे निक्षिप्य मरीचिकाजलेन परिजिहीर्षसि । यत्र च योग्ये स्वरूपसुखं तत्र

तव किमावरणेनापि साक्षिरूपज्ञानस्य तत्कार्थस्य चानपायाङ्गीकारात् अस्माकमिव निरंशे तस्मिन्नेकांशमात्रावरणासंभवाच्च । यद्येवमविद्यायां महानाग्रहः परस्य । तर्हि विद्यायां किंचिन्न्यूनता स्यादेव । असिद्धाविद्यामङ्गीकृत्य तद्दुर्निरूपताङ्गीकारेण समाधानाद्वरं सिद्धविद्याया एव दुर्निरूपताङ्गीकरणम् । "धर्मिकल्पनात"इति न्यायात् । त्वन्मते जीवस्यापि ब्रह्मतया मायानिर्हरणपटोर्माययाविरोधाच्च । दृश्यते हि मन्त्रौषधिप्रयोगादिविद्याया एव स्तंभनोच्चाटनाद्यसंभावितावाधितकार्यकारित्वम् । अतएव विचित्रानन्तजगत्संतानकर्तुरीश्वरस्य सार्वज्ञमपि साधयन्ते शास्त्रार्थविदः । अन्यथाऽज्ञानस्य ज्ञानत्वं वा कुतो नाङ्गीक्रियते । अनात्मन्यपि कुतो न तत्कल्पनम् । दुर्निरूपताभूषणस्य सर्वत्र साम्यात् । न द्वितीयः । आकाशस्येवातिसूक्ष्मतयाऽपि तस्यादर्शनसंभवात् । अतिसूक्ष्ममपि विषयीकुर्वन्साक्षी वर्तत एवेति चेत् । वर्तताम् । योग्यस्यापि श्रवणादिरूपसहकारिविरहप्रयुक्तकार्यविरहसंभवात् । किंच किमावरणेनापि तस्यापनोद्यते । नहि दाहे जाते मण्यादिनाऽस्ति कोऽप्युपकारः । तन्मात्रावरकाज्ञानस्यैवं कथंचित्सिद्धावपि ब्रह्मावरकाज्ञानस्याऽसिद्धेश्च । नन्वन्धकारस्थितस्यापि पुंसः प्रकाशस्थघटोपलंभदर्शनात् ब्रह्मावरकमप्यज्ञानमावश्यकमिति चेन्न । यतो विषमोऽयं दृष्टान्तः । अन्धकारस्य हि विरलतया नायनरश्मिनिर्गमनाप्रतिबन्धकत्वेन तन्निर्भिद्य बहिर्गतानां नायनरश्मीनामर्थप्रदेशस्थप्रकाशसहकृतानां तत्प्रकाशिततत्तत्पदार्थोपलंभे किमसंभावितम् । इह तु स्वनिष्ठसुखाद्यप्रकाशव्यवहारसाधकावश्यकजीवचैतन्यावरकाज्ञानेनैव स्वात्मन्यप्यन्धीकृतस्य चैतन्यप्रकाशस्य तदज्ञानोल्लंघनासमर्थस्य सूक्ष्मतया परमात्मनि स्वत एव सुतरामन्धतया तदप्रकाशादिव्यवहाराय पृथगावरणानपेक्षणात् । नहि चक्षुष्मत इवान्धस्यापि घटानुपलंभार्थमन्धकारोऽपेक्ष्यते । अतः स्वकटाक्षमात्रेण मायोच्चाटनपटीयसः परमात्मनः कुतो माया । "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति त"इति हि स्मृतिः । अत एव न तृतीयः । किं"चैष सर्वेश्वर एष सर्वज्ञ एष सर्वान्तर्याम्येष योनिः सर्वस्ये"त्यादिश्रुत्या "तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप" "मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इवे"त्यादिगीतोक्त्या "मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे" "आत्मानमन्यं च स वेद विद्वान्" "तदभिज्ञोऽपि भगवान्सर्वात्मा सर्वदर्शनः"

"अथ विज्ञाय भगवान्सर्वात्मा सर्वदर्शनः" "स सर्वदृगुपद्रष्टे"त्यादिभागवतवचनेन च ब्रह्मणः स्वविषयेऽन्यविषये चास्ति, प्रकाशोऽस्ति, प्रकाशत, इत्येव व्यवहारसिद्धया भवदुक्तापादकस्य सर्वथाऽसिद्धेः। "न यत्र श्रूयते माया लोकदृष्टिविकल्पना" "यस्यानुभूतिः कालेन लयोत्पत्त्यादिनाऽस्य वै" "स्वतोऽन्यस्माच्च गुणतो न कुतश्चन रिष्यतीति"च भागवतोक्त्या "निरनिष्टो निरवद्य"इत्यादिश्रुत्या च भगवति कल्प्यमानाविद्यायाम्तन्निमित्तज्ञानतिरोधानस्यापि वाधितत्वाच्च। "मायिनं तु महेश्वरमि"-त्यस्य तु गृही धनी देवदत्त इतिवत् मायायास्तदधीनत्वेनाप्युपपत्तेः। नहि गृहं धनं वा देवदत्ताश्रितम्। अपितु तदधीनमेव। किंच तलेन "मायां तु प्रकृतिं विद्यादि"तिमायायाः प्रकृतित्वाभिधानात् मायानामकप्रकृत्याधारत्वलाभेऽप्यविद्यावद्धत्वस्यालाभाच्च। "माया नारायणीशाना शारदेत्यंबिकेति च। नामधेयानि कुर्वंति स्थानानि च नरा भुवि"इति भागवते भगवत्यैव मायेति दुर्गानामसु पठितत्वात्। मायानामकदुर्गारूपश्री साहित्येनापि मायित्वस्योपपत्तेः। निषिद्धयमानातु अवद्यरूपा विविधभ्रमहेतुभूताऽविद्यैवेत्युभयोरप्यविरोधात्। अत एव "लोकदृष्टिविकल्पने"ति निषेधवाक्ये विशेषणं प्रायुङ्क्त। नच वाच्यमुक्तवचनैः कृष्णस्यैव मायानिषेधः क्रियते न निर्गुणब्रह्मण इति। त्वद्वचनेनापि महेश्वरस्यैव मायानिर्देशो न तादृशब्रह्मण इति उभयवहिर्भूतं भवद्ब्रह्म निर्गुणं शशविषाणमेव स्यात्। किंच त्वन्मते मायाशवलत्वेनाभिमतस्य कृष्णस्यैवै तैर्निशितैः प्रमाणवाणैरमायित्वलाभे शुद्धस्य सुतरां तल्लाभापाताच्च। "साक्षात्परं ब्रह्म मनुष्यलिंगं" "पूर्णं ब्रह्म सनातनं" "रूपं यत्तत्प्राहुरव्यक्तमाद्यं ब्रह्म ज्योतिर्निर्गुणं निर्विकारम्। सत्तामात्रं निर्विकल्पं निरीहं स त्वं साक्षाद्विष्णुरध्यात्मदीपः"। "शिवः शक्तियुतः शश्वत्त्रिलिंगो गुणसंवृतः। हरिस्तु निर्गुणः साक्षात्पुरुषः प्रकृतेः परः। स सर्वदृगुपद्रष्टा तं भजन्निर्गुणो भवेत्" "मत्तः परतरं नान्यत्किंचिदस्ति धनञ्जय"इत्यादिवचनशतैः कृष्णस्यैव साक्षात्परब्रह्मत्वाभिधानाच्च। कथं तर्हि तस्य सार्वज्ञादिगुणाधारस्य "साक्षी चेता केवलो निर्गुणश्चे"ति श्रुत्युक्तं निर्गुणत्वमिति चेन्न। स्मृतिवदेव श्रुतेरपि प्रवृत्तिसंभवात्। स्मृतिर्हि "हरिस्तु निर्गुण"इत्यादिका सगुणत्वेन पराभिमतं हरिमेव निर्गुणत्वेन प्रतिपाद्य "ससर्वदृगुपद्रष्टे"ति तमेव परामृश्य सार्वज्ञादिगुणाधारं

प्रतिपादयन्ती स्पष्टं सगुणमेव निर्गुणमाह। नच वाच्यं चैतन्यविवक्षया गुणमिथ्यात्वेन वा निर्गुणत्वोक्तिरिति। "शिवः शक्तियुतः शश्वत्त्रिलिङ्गो गुणसंवृत" इत्युक्तशिवेऽपि निर्गुणत्वोक्तिप्रसङ्गात्। विशेषणानां श्रुतैकविशेष्यनिष्ठतावश्यंभावाच्च। अन्यथा श्रुतहानिवाक्यभेदयोरपरिहारात्। स इति निर्गुणमनूद्य तत्रैव सर्वदृगुपद्रष्टेत्यादि-गुणविधानानुपपत्तेश्च। विरुद्धविशेषणद्वयसमावेशः कथमेकत्रेति चेन्न। स्मृतिसती-कृतैकस्थाननिवासयोः सामान्यविशेषरूपयोर्निष्किंचनोऽयं कुटुंबीतिवद्विरोधस्यैवा-भावात्। बहुतरद्रव्याभावपरा निष्किंचनत्वोक्तिश्चेद्बन्धकगुणत्रयाभावपरा निर्गुण-त्वोक्तिरस्तु। संकोचस्योभयत्र साम्यात्। अवश्यं चैतदेवम्। "शक्तियुत" इति प्रकृतिसंबन्धोक्त्या "त्रिलिंग" इति वैकारिकतैजसतामसात्मकाहंकारबन्धोक्त्या "गुणसंवृत" इति गुणानामावरकत्वोक्त्या "उपधावन्विभूतीनां सर्वासामश्नुते गति"-मित्युक्तसत्त्वादिगुणोपादानकविभूतिहेतुत्वोपयोगितया च पूर्वश्लोके "गुणसंवृत" इत्यत्र गुणत्रयप्रस्तावावश्यंभावेन हरौ तद्वैलक्षण्यप्रतिपादकोत्तरश्लोके गुणत्रयनिषेध-स्यैवावश्यकत्वात्। एवंचैकत्र निर्णीतः शास्त्रार्थोऽपरत्रापीति न्यायेन निर्गुण-त्वोक्तिः सर्वत्र गुणत्रयनिषेधपरैव। समाख्याबलात्। ननु श्रुतिशतसिद्धसर्वप्रेक्षाव-दपेक्षितज्ञानसुखविनयविवेकैश्वर्यनित्यतृप्तत्वनित्यमुक्तत्वजगत्स्रष्टृत्वान्तर्यामित्वादिशु-भगुणनिषेधपरा। एतेन श्रुतिरपि समाहितार्था वेदितव्या। किंच यथा कृतकः शब्दोऽनित्य इति संभवद्द्विविधपदच्छेदे वाक्ये पूर्वविशेषणबलेनानित्य इति पद-च्छेदो गम्यते। तथा संभवद्द्विविधपदच्छेदे "केवलोनिर्गुण" इति वाक्ये "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा" इत्यादि बहुतरगुणप्रतिपादकस्वपूर्व-भागस्थविशेषणगणबलेनानिर्गुणइत्येव पदच्छेदलाभादा"स्मीय एव बाणो भवन्तं प्रहरती"तिन्यायेन भवद्वचसैव भवदभिमतनिर्गुणत्वभङ्गप्रसङ्गात्। युक्तं चैतत्। यच्छ्रुतिः स्वाभिमतबहुतरभगवद्गुणानभिधाय स्वविरोधिभूतकुसमयप्राप्तनिर्गुणत्व-वादभञ्जनायानिर्गुण इति तं विशिनष्टीति। अन्यथा स्वोक्तमेव स्वयं व्याहन्तीति श्रुतिरुन्मत्तप्रलपितमेव स्यात्। ननु क्वचित्तु पुराणादौ स्पष्टं निर्गुणत्वोक्तिरप्यस्तीति चेन्न। दत्तोत्तरत्वात्। किंच प्रमाणाप्रामाण्यकरणादभीतस्य तत्र मत उक्तरीत्या निरवकाशतयाऽपौरुषेयतया च निषेधरूपतया च प्रबलयाऽनयाऽनिर्गुणश्रुत्या निषेद्धुं

तत्सर्वमनुवादोऽस्तु । अनादिकुसमयप्राप्तिमात्रेणापि "तद्धैक आहुरसदेवेदमग्र-आसी"दित्यादाविवानुवादसंभवात् । किं बहुना श्रुतावपि तादृशोक्तिरनुवाद एवास्तु । निषेधरूपतयोत्तरतया चास्या एव श्रुतेस्त्वद्रीत्या प्रबलत्वात् । शब्दतत्वार्थविदामस्माकं तु मते "गुणभृन्निर्गुणो महान्" "निर्गुणं गुणभोक्तृ चे"त्यादिरूपे तस्मिन् पूर्वोत्तरपर्यालोचनया दोषरूपप्राकृतसत्वादिगुणराहित्यस्याऽऽनन्दादिशुभगुणसंपत्तेश्च स्पष्टं तदर्थत्वलाभेन त्वदभिमतव्याहतधर्ममात्रशून्यत्वरूपनिर्गुणत्वनिषेधस्य निष्प्रत्यूहत्वात् । नहि जङ्गमाजङ्गमं जगदित्युक्ते पूर्वस्यानुवादतामुत्तरपदस्य तन्निषेधरूपतां च यः कोऽपि ब्रूते । अपितु जगद्वैविध्याश्रयणेनोभयोरपि व्यवस्थामेव सर्वेऽपि वदन्ति । तथेहाप्युक्तद्विविधोक्तिः सार्वजनीनगुणद्वैविध्यमाश्रित्य कुतो न व्यवस्थेया । अस्तु वेहापि निर्गुण इत्येव पदच्छेदः । तदापि दोषासंपादकैकत्वाद्यनेकगुणप्रतिपादकस्वपूर्वापराविरोधाय सामान्यनिषेधपदस्यास्य बन्धकतया दोषरूपगुणत्रयनिषेध एवार्थो लभ्यते । न त्वदभिमतव्याहतसकलधर्मनिषेध । सावकाशोत्सर्गादप्यपवादस्यैव निरवकाशतया प्रबलत्वात् । अत एव हि "अग्नीषोमीयं पशुमालभेते"तिपुण्यरूपहिंसाविशेषविधायकवाक्यविरोधेन "न हिंस्यात्सर्वा भूतानी"ति सर्वपदसहितस्यापि सामान्यनिषेधस्यैव दोषहेतुब्राह्मणादिहिंसाविशेषनिष्ठतावर्णनेन संकोच एव सर्वशिष्टैराश्रितः । तवापि मते गुणपदस्य धर्मपदपर्यायताऽऽवश्यकी । अन्यथा सर्वेश्वरत्वादेरप्यनिषेधापातात् । एवंचासंकुचिततदर्थनिषेधे निर्गुणत्वस्यापि निषेधप्रसङ्गेनेष्टहान्या संकोचस्यावश्यकत्वात् । एक इत्यादिविशेषणैरेकत्वादेरिव निर्गुणत्वस्यानुवादाभावान्न निषेध इति चेन्न । घटरहितं भूतलमित्यत्र घटपदेन घटस्येव निर्गुणपदान्तर्गतगुणपदेनैव तस्यापि गुणरूपतयानुवादसंभवात् । नचैतदत्यन्तापूर्वम् । बलीवर्दः समागतो न गौरिति गोपालैरपि व्यवह्रियमाणत्वात् । सामान्यपदस्य च विशेषनिष्ठता घटमानय पटमानयेत्यादौ सर्वजनसंप्रतिपन्ना । अन्यथा यः कोऽपि गुणोऽस्मिन्नास्तीत्यादिलौकिकवाक्यस्य "न हिंस्यात्सर्वा भूतानी"त्यादि श्रुतिवाक्यस्य च पुनरुक्तिदोषदुष्टत्वेनाप्रामाण्यप्रसङ्गात् । एवंचसति "एष सर्वेश्वर एष सर्वज्ञ"इत्यादिशुभगुणप्रतिपादक श्रुतिस्मृतयोप्यनुकूलिताः स्युः । एतेन निषेधरूपतया निर्गुण श्रुतेरेव प्राबल्यमित्यपि निरस्तम् । निषेधरूपस्यैव "नहिंस्या-

दि''तिवाक्यस्य विधायकवाक्यविरोधेन संकोचदर्शनात् । अन्धकारे भ्रान्तप्रतिपन्न-घटाभावस्यालोके सति प्रमितघटसत्तयैव बाधदर्शनाच्च । नापि पूर्वापरतया प्राब-ल्यदौर्बल्ये । अनादौ वेदे पूर्वापरभावस्यैवाभावात् । पूर्वश्रुत्यैवापरस्मृतिबाधदर्श-नात् । पूर्वयोगिज्ञानेनास्मदादिज्ञानबाधाच्च । किंतु प्रमाणेन सताऽप्रमाणमेव बाध्यते । इहतु प्रामाण्यं श्रुतित्वेनोभयोरपि समम् । निरवकाशत्वं च विशेषनिष्ठत्वे-नास्मच्छ्रुतेरेव । अतः सगुणवाक्यानुसारेणैव निर्गुणवाक्यं नेयम् । किंच "कपिंज-लानालभेते"त्यत्र बहुत्वार्थकविभक्त्यन्तकपिंजलमात्रवाचकसामान्यपदस्यापि त्रित्वे पर्यवसानं पूर्वमीमांसासिद्धम् । चोदनायास्तावता चरितार्थत्वात् । वृथा बहुहिंसा-करणंस्यानौचित्यमेव हि तत्र बीजम् । एवमिहापि गुणप्रतिपादकबहुतरश्रुतिहिं-साया अनुचितत्वात् । सामान्यपरस्यापि निर्गुणपदस्थगुणशब्दस्य कुतो न गुणत्रित्वे पर्यवसानम् । पक्षिहिंसातोऽप्यपौरुषेयश्रुतिहिंसाया एव गुरुतरदोषापादकत्वात् । ननु सगुणश्रुतिः सर्वाप्यनुवादिकेति चेन्न । वृथाऽपौरुषेयतया निर्दोषश्रुतेरप्रामाण्यकथनायो-गात् । सामान्यतो गुणमात्रनिषेधकनिर्गुणश्रुतिविरोधादिति चेन्न । गुणप्रतिपादक-श्रुतिनिरासे सति संकोचे कारणाभावान्निर्गुणश्रुतेः सामान्यनिषेधत्वं तेनैव च तन्निरास इत्यन्योन्याश्रयात् । अपिचैकांशस्याप्रामाण्यापादकानुवादकत्वपक्षपरि-ग्रहादप्युभयोः प्रामाण्यसंपादकसंकोचपक्षस्यैव न्यायप्राप्तत्वात् । अन्यथा "उदिते जुहोती"त्यादेः "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादेश्चानुवादत्वप्रसङ्गात् । "अनुदिते जुहोती"त्यादे"रसदेवेदमग्रआसीत्तत्सदासी"दित्यादेश्च निषेधस्य तत्रापि सुवच-त्वात् । विरुद्धयोः श्रुतिवाक्ययोः एकस्याप्रामाण्यस्याङ्गीकारयोग्यत्वे मीमांसावैयर्थ्याच्च । यदिच "कोहि मीमांसको ब्रूते विरोधे वाक्ययोर्मिथः । एकं प्रमाणमित-रत्त्वप्रमाणं भवेदिती"ति न्यायमनुसृत्य शाखाभेदादिनाऽसदादिपदानामर्थान्तरकथ-नेन च तत्र परिहारं पश्यसि । तर्हि किं काणोऽसि । ततोऽप्यतिस्पष्टं परिहारं कुतोऽत्र न पश्यसि । वृथा भगवद्गुणद्वेषिणस्तत्र दोषित्वस्यैव प्राप्तेः । किंच ब्रह्म-निष्ठकर्तृत्वदेवत्वसर्वज्ञत्वादीनां श्रुतिव्यतिरिक्तप्रमाणान्तराप्राप्तत्वात् कथमनुवादः । तथाच "अप्राप्ते शास्त्रमर्थवदि"ति न्यायेन भगवद्गुणगणांबुधेः श्रुतिसरित्संदोहहृद-यालिंगनस्य बलादेवाऽऽपातात् । इतरथा निर्गुणश्रुतेरप्यनुवादकत्वं स्यात् । निषेध-

श्रोक्तविधया गुणविधिरेवास्तु। अथवा त्वद्रीत्या सर्वधर्मशून्यत्वरूपनिर्गुणत्वप्रतिपादकस्यास्य निर्गुणत्वरूपधर्मनिषेधकत्वस्यापि संमतत्वात् स्वस्य स्वयमेव निषेधोऽस्तु। यदि च निषेध्योपस्थापकतया सगुणश्रुतेः सावकाशत्वम्। तर्हीहापि निषेध्योपस्थापकतयैव निर्गुणश्रुतेरपि सावकाशत्वं स्यात्। मानप्रसाधनेऽभावस्यैव निषेध्यत्वात्। किंच निषेध्योपस्थितिपूर्वकत्वनियमोऽपि प्रात्यक्षिक एवाभावज्ञाने न शाब्दे। नञ्मात्रप्रयोगेऽपि गृहीतसङ्गतिकस्य पुंसः तदर्थभूताभावमात्रप्रतीतेर्दुर्वारत्वात्। सार्वजनीनत्वाच्च। किंतु साकांक्षतामात्रमुर्वरितम्। तत्पूर्तय एव पदान्तरम्। नतु शाब्दाभावज्ञानोपयोगित्वेन। नच तावदपि प्रकृते संभवति। निर्गुण इति समस्तपदान्तर्गतपदद्वयेनैव परस्परमाकांक्षापरिपूरणात्। नापि निर्गुणवाक्ये सामान्यतो निषेध्यतयोक्तगुणानामेव प्रपञ्चनार्थमिदमिति वाच्यम्। तथासति कथं निर्गुण इति प्रश्नवाक्यपूर्वकं एकत्वरहितः देवत्वरहितः इत्याद्याकारेण वाक्यविन्यासः स्यात्। हेतुगर्भविशेषणत्वेन तूष्णीमेकत्वरहित इत्याद्याकारेण वा वाक्यविन्यासः स्यात्। एकत्ववान् देवत्ववान् इत्यादिवाक्यं तु परस्परविरुद्धतयाऽप्रमाणं वा स्यात्। सामान्यपदस्यार्थसंकोचेन प्रमाणं वा स्यात्। नतु तृतीयाऽत्र गतिर्मतिमता वक्तुं शक्या। नहि ग्रामोऽयं देवदत्तवान्यज्ञदत्तवान् चैत्रवान्निर्जनश्चेति स्वोक्तनिर्जनत्वं कोऽपि प्रपञ्चयन् दृष्टः। उपासनापरं सगुणवाक्यमतो नातो गुणसिद्धिरिति चेन्न। क्रियारहितस्यास्य साकांक्षतयाऽस्तिभवत्योः सर्वत्रान्वय इति न्यायेन भवतीति क्रियाध्याहारे निर्गुणत्वसिद्धिवत्सगुणत्वसिद्धेरप्यावश्यकत्वात्। अकस्मादुपासितव्य इति स्वाभिमतार्थसाधकाभिमतविशेषणाध्याहारे च एकप्रायपठितनिर्गुणत्वस्यापि भङ्गप्रसङ्गात्। उभयानपेक्षायामेकत्ववानित्याद्यर्थलाभेन पुनः गुणसिद्धेरप्रत्यूहत्वात्। तस्मात्सयुक्तिशरसगुणवादधनुषोऽग्रे न निर्गुणवादधनुः प्रत्यवतिष्ठते। किंचोक्तरीत्या वेदेतरप्रमाणान्तराप्राप्तभगवद्गुणप्रतिपादकश्रुतिसंदर्भस्य कथमनुवादकत्वम्। सर्वज्ञेश्वरप्रत्यक्षसिद्धतामादायानुवादकत्वं चेत्तर्हि तवापि तत एवैक्यमप्यनुवादकं स्यात्। नहि वेदोपदेष्टा भगवान् वेदार्थभूतमैक्यं न साक्षात्कुरुते। नापि तत्र तत्र भगवद्गुणप्रतिपादको वेद एव स्ववाक्यान्तरसिद्धतामात्रेणानुवादकः। ऐक्येऽपि साम्यात्। एतेनानुमानसिद्धतापि निरस्ता। अस्तु वा

कथंचिदनुवादकत्वम् । तथापि तूष्णीमनुवादोऽयमुत दूषणार्थम् । नाद्यः । "बहुप्रमाणसंवादश्च दार्ढ्यहेतु"रिति न्यायेन दार्ढ्यहेतुतया तस्यादोषत्वात् । तत्राप्यनुवादकत्वेनाभिमते "अग्निर्हिमस्य भेषज"मितिवाक्ये का हानिरभून् । कथंचिच्छ्रोतुर्नास्तिकस्य सिद्धार्थबोधकत्वेनानपेक्षितत्वमात्रप्राप्तावपि तद्वाक्यार्थस्येषदप्यहानेः । नह्येतद्वाक्यश्रवणसमनन्तरं नाग्निर्दहतीत्यस्ति । तथाच सगुणवाक्योक्तगुणसिद्धिरप्रत्यूहैव । न द्वितीयः । नेतिदूषणपदाभावात् । निर्गुण इत्यत्र समस्तपदान्तर्गतनञो विभागासंभवेन एको नेत्यादौ निषेधाय प्रयोगायोगात् । केवलमेकत्ववानित्यादिरूपेणैव वाक्यार्थसिद्ध्या गुणप्राप्तेर्दुर्वारत्वात् । निर्गुण इतिगुणनिषेधे एकत्वादीनामपि गुणत्वात्तन्निषेधोप्यर्थात्कृतप्राय इति चेन्न । निरस्तत्वात् । नहि बहुकुटुम्बोऽयं निष्किञ्चनश्चेत्युक्ते कुटुम्बस्यैव निषेधो लभ्यते । किंचैवंतर्ह्यार्थिक एव प्रागुक्तगुणनिषेधो न शाब्द इति प्राप्तम् । वाक्यार्थमर्यादया हि नञोऽभावान् । भावे च प्राक्पठितनिर्गुणत्वस्यापि निषेधापत्त्या एको भवतीति वा एकत्ववानात्मेति वाऽर्थपर्यवसानस्यावश्यकत्वात् । एवंचार्थिकनिषेधादप्युक्तरीत्या शाब्दविधेरेव प्रबलतया प्रबलानुसारेणैव दुर्बलस्य कथंचिन्नेयत्वात्पुनर्गुणप्राप्तिरप्रत्यूहैव । अनुवादलिङ्गाभावाच्च न दूषणार्थमनुवादोऽयम् । भिन्नवाक्यतया निषेधे हि एक इति यत्तन्नेत्याद्याकारावश्यंभावेन यत्तत्पदमनुवादचिह्नम् । एकवाक्यतया निषेधे तु "न सुरां पिबेदि"त्यादाविव एको न देवो नेत्यादिरूपेण साक्षात्तत्संबन्धी नञेवानुवादलिंगम् । इहतु नोभयमप्यस्तीति कथं दूषणार्थमनुवादोऽयम् । किंच घटोऽस्तीत्युक्ते घटाभावस्याप्यार्थिकनिषेधलाभवदेको भवति देवो भवतीत्यादिरूपस्य वा एकत्ववान् देवत्ववानित्यादिरूपस्य वा वाक्यार्थस्य सिद्धावेकत्वाभावदेवत्वाभावादिरूपनिर्गुणत्वस्यापि निषेधलाभेन वैपरीत्यस्यापि सुवचत्वात् । नचानिर्णयः । त्वन्मतेऽनुपसंजातविरोधित्वेनोपक्रमस्यैवोपसंहारादपि प्रबलत्वेनोपक्रमस्थसगुणश्रुत्यनुरोधेनैव निर्गुणश्रुतेर्व्याख्येयत्वात् । "त्यजेदेकं कुलस्यार्थे"इतिन्यायेन गुणप्रतिपादकबहुतरश्रुतिरक्षणायैकस्याः निर्गुणश्रुतेरेव बाध्यत्वाच्च । वस्तुगत्या निर्गुणपदस्थनञा निषेध्यस्य गुणस्य तत्पदस्थगुणपदेनैवानुवादात् पदान्तरं नानुवादपरम् । नह्येकवारं दूषयितुं द्विवारमनुवादः । नञा सामान्यतो निषेद्धुं विशिष्यानुवादः । किंच

तत्त्वावेदकत्वेन भवदभिमतमहावाक्यस्थैकपदार्थस्यैकत्वस्य निर्गुणत्वादिविशेषण-संबन्धयोग्यविशेष्यपरदेवपदार्थस्य त्वदभिमतजगदधिष्ठानत्वरूपसर्वभूतगूढपदार्थस्य प्रत्यक्स्वरूपसर्वभूतान्तरात्मपदार्थस्यापरिच्छिन्नस्वरूपसर्वव्यापित्वस्य मुक्तिकालीनानन्दापरोक्षानुभवपरसाक्षिपदार्थस्य जहदजहल्लक्षणायामप्यवशिष्यमाणचित्पदार्थस्य फलरूपस्य केवलपदार्थकैवल्यस्य च कथं दूषणार्थमनुवादः। किंच "निर्गुणश्चे"ति चशब्देन समुच्चीयमानानामेतद्वाक्यस्थपदबोध्यार्थान्तराणामप्यावश्यकत्वेनार्धजरतीयस्यानुपपत्तेर्नैकमपि पदमनुवादकम्। दूषणाय तु नतराम्। श्रुतनिर्गुणपदयोगपरित्यागेनाश्रुतैकादिपदयोगकल्पकाभावाच्च। किंच माण्डूकोपनिषदि "तुरीयं तत्सर्वदृक्सदे"तिमोक्षदशायामपि श्रूयमाणसार्वज्ञस्य "तमेवं विद्वानमृत इहे"तिश्रुतौ पूर्वपरामर्शितच्छब्देन प्रकारवाचिनैवंशब्देन च साक्षान्मुमुक्षुज्ञेयत्वेनोक्तसहस्रशीर्षत्वादिमहिम्नश्च कथं दूषणायानुवादः। नच साक्षान्मुमुक्षुज्ञेयत्वमसिद्धम्। "नान्यः पन्था"इति मार्गान्तरनिषेधात्। एतेन साकारसगुणविष्णुज्ञानादेव मोक्ष इत्यपि समर्थितम्। नच पुंसूक्तं न विष्णुपरमिति वाच्यम्। उपसंहारे "श्रीश्च ते लक्ष्मीश्च पत्न्या"विति विष्णुलिंगात्। भागवते च "तत्र गत्वा जगन्नाथं देवदेवं वृषाकपिम्। पुरुषं पुरुषसूक्तेनोपतस्थे समाहित"इति विष्णौ पुरुषशब्दं प्रयुज्य स्पष्टं तत्सूक्तत्वतन्मन्त्रत्वयोः कथनाच्च। "उपान्मन्त्रकरण"इत्यनुशासनात्। किंच "अन्तस्तद्धर्मोपदेशात्" "आकाशस्तल्लिंगात्" "अत एव प्राणः" "अत्ता चराचरग्रहणात्" "दहर उत्तरेभ्य"इत्यादिसूत्रेषु सूत्रकृता स्वसिद्धान्तनिर्णयाय हेतुतयोक्तपरोवरीयस्त्वोद्गीथत्वानन्तत्वश्रीपतित्वचराचरात्तृत्वज्यायस्त्वादिधर्माणां कथं दूषणायानुवादः। नहि पूर्वपक्षदूषणाय दुष्टमेव हेतुं सूत्रकारो ब्रवीतीति तद्ग्रन्थे प्रवृत्तेन वक्तुं युक्तम्। तस्माद्भगवद्गुणगणरत्नमालेयं भगवता सूत्रकारेणैव हृदि धृता न मर्कटेनापि त्वया विच्छेत्तुं शक्या। किंच भवदभिमतसकलगुणशून्यत्वरूपनिर्गुणत्वरूपधर्मस्याप्यभावावश्यंभावात् किं दूषणम्। यदर्थमनुवादः। गुणाभावरूपस्य निर्गुणत्वस्याप्यन्ततो निषेधेऽभावाभावो भाव एवेति गुणाभावाभावस्य गुणरूपतया "द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत"इति न्यायेन त्वद्रीत्यैव गुणानामतिशयेन प्राप्तेश्च। अभावरूपो धर्मोऽङ्गीक्रियते चेत् किं भावैरपराद्धम्। सदद्वैतभङ्गस्योभयत्र साम्यात्। सामान्यतो

धर्मनिषेधार्थं प्रवृत्ताऽपि निर्गुणश्रुतिर्न स्वार्थमभावं निषेधति, तथासत्यविद्यमानार्थ-बोधकत्वेन स्वस्या एवाप्रामाण्यप्रसङ्गादिति यदि, एवं तर्हि भावत्वमभावत्वं चा-प्रयोजकम् । किंतु श्रुतिः स्वप्रामाण्यपरिरक्षणायैवाभावं न निषेधतीति प्राप्तम् । तथाचापराप्रामाण्यप्रसङ्गादपरश्रुत्यर्थमपि न निषेधतीत्यस्तु । नहि श्रुतिरसूयावती । येन स्वगृहमदहन्ती परगृहानेव दहेत् । दहेच्चेत्तद्गृहवीथीस्थं स्वगृहमप्यन्ततो दहे-देव । अविशेषात् । किंतु धर्मप्रवर्तिका सा स्वायासं सोढ्वाऽपि परस्यैवोपकारं कुर्यात् । नहि स्वशिरःच्छेत्तुमयतमानाः प्रेक्षावन्तः स्वपादच्छेदाय प्रयतन्ते । नवा स्वनखमात्रव्रणमसहमाना श्रुतिवनिता सर्वाङ्गव्रणं सहते । किं तर्हि खड्गग्रहणस्य कृत्यमिति चेन्न । स्वशत्रुच्छेदस्यैव तत्फलत्वात् । शत्रुश्च "निरनिष्टो निरवद्य" इत्यादिरूपायाः श्रुतेः बन्धकगुणत्रयादिरेवेति तमेव छिंद्यादिति युक्तमुत्पश्यामः । नन्वभिन्ना गुणा मयाप्यङ्गीक्रियन्ते । स्वरूपमात्रपर्यवसायित्वात्तद्व्यपदेशस्येति चेत् । किंब्रह्मस्वरूपमेवास्ति न गुणाः । अभेदोक्तिस्तु जगत इव तद्व्यतिरेकेणा-सत्त्वमात्रनिबन्धनेति मन्यसे । उत स्वरूपसतामेव सार्वज्ञसर्वकर्तृत्वादिगुणानां जीवचितो ब्रह्मचितेव रामकृष्णाद्यवताराणां विचित्रकार्यकर्तृतया स्वरूपसतामेव स्वमूलरूपेणेव च भेदाभावमात्रं गुणानां गुणगुणिभावस्य गुणानन्त्यस्य च न मिथ्यात्वम् । सार्वज्ञादिगुणवैशिष्ट्यप्रतीतेश्च न भ्रमत्वमिति मन्यसे । नाद्यः । तथासति जगत इव मिथ्यात्वावश्यंभावेन प्रागुक्तदूषणगणानिस्तारात् । अस्मन्मत-साम्याभावाच्च । न द्वितीयः । अपसिद्धान्तात् । त्वदभिमताखण्डत्वनिर्विशेषत्वभङ्ग-प्रसङ्गात् । चरमप्रमायाः निष्प्रकारत्वहान्यापातात् । गुणानां स्वरूपत एव निषेध-कनिर्गुणश्रुतेस्त्वयाप्यर्थान्तरस्य वाच्यत्वात् । सगुणवाक्यानामप्यैक्यवत्तत्त्वावेदक-त्वापातात् । ऐक्यस्येव गुणानामपि दूषणायोगात् । ब्रह्मचिन्मात्रलक्षणैक्याङ्गी-कारासंभवात् । विरुद्धधर्माक्रान्तयोर्जीवब्रह्मणोरैक्यायोगापाताच्च । नन्वभिन्नानां कथं गुणगुणिभावादिकमिति चेन्न । त्वन्मतेऽभिन्नयोरेव ब्रह्माद्वैतयोरविप्रतिपन्न-त्वविप्रतिपन्नत्ववत् स्वाभिन्नाद्वैतं प्रति जीवब्रह्मचितोरनुयोगित्वप्रतियोगित्ववच्चोप-पत्तेः । तदभावे च येनकेनचित्समं यस्य कस्यचिदैक्यापत्त्या भवदभिमतैक्या-सिद्धेः । किंचाभेद एव गुणगुणिनोः कुतः । "नेह नाने"ति प्रमाणाच्चेत् । इदमपि

"एष सर्वेश्वर" इत्यादिगुणप्रमाणादेव । नहि गुणप्रतिपादिका श्रुतिः गुणगुणिभावं न प्रतिपादयतीति शक्यते वक्तुम् । अयुक्तोऽर्थः कथं प्रमाणादपि सिध्येदिति चेत् । अयुक्तश्रौतक्रियारूपयागनिष्ठकालान्तरभाविस्वर्गसाधनत्ववदिति ब्रूमः । उपपादकमपि तत्रापूर्वं तत एव सेत्स्यति चेदत्राप्यमुष्मादुपपादकं किंचिदपूर्वमेव सेत्स्यतीत्युत्तरम् । श्रुतिशतसिद्धस्य श्रुत्यन्तराविरुद्धस्य चार्थस्योपपादकाभावमात्रेण त्यागायोगात् । अन्यथा विजनविपिनान्तर्वर्ति नीशाराद्यङ्कुरस्यापि त्यागापातात् । किंच तवापि मते सुखस्य कथं ब्रह्मस्वरूपता । ब्रह्मैवास्ति न सुखमिति न तावत्तद्वचनार्थः । तार्किकमतप्रवेशापातात् । किंत्वस्ति सुखं तच्च ब्रह्मस्वरूपमेवेति । एवं तर्हि कथं गुणस्य न गुणिरूपता । नच ब्रह्मसुखज्ञानादिकं न गुण इति वाच्यम् । लाघवात्सुखत्वज्ञानत्वादेरेव गुणत्वावान्तरजातित्वात् । नच वाच्यं सत्यज्ञानादिपदानां लक्षणया अखण्डब्रह्मचिन्मात्रपरत्ववादिनो ममैतद्वाक्यस्थपदानामपि लक्षणया ब्रह्मचिन्मात्रपरत्वान्न गुणसिद्धिरिति । तथासति तन्मध्यपतितनिर्गुणपदस्यापि तथात्वावश्यंभावेन भवदभिमतनैर्गुण्यस्याप्यसिद्ध्यापातात् । स्वरूपसुखस्याप्यभावे मोक्षस्याप्यपुरुषार्थत्वप्रसङ्गाच्च । दुःखाभावमात्रत्वेन पुरुषार्थत्वे च गौतममतप्रवेशापत्तेः । ऐक्याविरोधिधर्मप्रकारता नाखण्डत्वविरोधिनीति चेत् । न । सगुणवाक्योक्तानामेकत्वादिधर्माणामपि तदविरुद्धत्वात् । जीवगतासार्वज्ञादेरेव त्याग ऐक्याविरोधलाभेन ब्रह्मगतसार्वज्ञादेरप्यखण्डत्वाविरोधित्वप्रसङ्गाच्च । जीवचितोऽपि ब्रह्मचैतन्यत्वेन सर्वज्ञत्वादिसंभवात् । ब्रह्मस्वरूपमात्रप्रश्नोत्तरत्वेन धर्ममात्रस्यैवाखण्डवादविरोधित्वावश्यंभावाच्च । सगुणजीवेश्वरैक्यविरोधितया निर्गुणत्वस्यैव त्यागापाताच्च । एतादृशपारिभाषिकाखण्डत्वकल्पकाभावाच्च । नहि "नेह नानास्ति किंचने" त्यस्य जीवब्रह्मैक्यविरोधि किंचन नास्तीत्यर्थः । विश्वमिथ्यात्वस्य निष्कारणत्वापातात । किंच सत्यादिपदमपि किं पारमार्थिकसत्यत्वादेर्वाचकम् । उत व्यावहारिकसत्यत्वादेः । न तावद्द्वितीयः । ब्रह्मणोऽपि व्यावहारिकसत्यत्वादेरेवापातेन त्वयैवानङ्गीकारात् । तादृशपदेन ब्रह्मणि क्रियमाणाया व्यावृत्तेरप्यव्यावहारिकसत्यव्यावृत्तिरूपत्वावश्यंभावेन तस्य पारमार्थिकसत्यत्वस्याप्यभावापाताच्च । मुख्यतः स्वार्थस्यार्थतश्च स्वार्थविपरीतव्यावृत्तेश्च शब्दलभ्यत्वात् । अन्यथा "विश्वं सत्यमि" त्यादिश्रुत्या जगतोऽपि पारमार्थिक-

सत्त्वापातात् । न प्रथमः । गङ्गापदलक्ष्ये तीरे गङ्गात्वाभाववत्तादृशपदलक्ष्ये ब्रह्मणि तदर्थभूतपारमार्थिकसत्यत्वाभावप्रसङ्गादेव । लक्षणाया मुख्यार्थबाधमूलकत्वावश्यंभावात् । गङ्गापदवाच्ये प्रवाहे गङ्गात्ववत्तत्पदमुख्यवाच्यस्यान्यस्यैव परमार्थसत्त्वापाताच्च । शक्तस्यैव पदत्वेन मुख्यार्थस्याप्यावश्यकत्वात् । अन्यथोक्तरीत्याऽसत्यव्यावृत्तेरप्यसिद्ध्यापाताच्च । सत्यत्वमेव तत्पदार्थः । तच्च मन्मतेऽपि ब्रह्मण्यस्त्येवेति चेन्न । ब्रह्मणि सत्त्वे तस्य लक्ष्यत्वायोगात् । नहि तीरमिव गङ्गापि गङ्गापदलक्ष्या । तादृशधर्मविशिष्टत्वेन ब्रह्मणोऽखण्डत्वाभावप्रसङ्गाच्च । ब्रह्माभिन्नधर्मत्वान्नाखण्डत्वभङ्ग इति चेन्न । सर्वज्ञत्वसर्वकर्तृत्वाद्यनन्तश्रुतिसिद्धधर्माणामप्येवमेवाङ्गीकारसंभवेन तन्निषेधायोगाच्च । एवं सति जीवाभेदोऽपि न सिद्ध्येदिति चेत् । मा सिद्ध्यतु का नो हानिः । कपर्दिकालाभार्थं लक्षलाभपरित्यागायोगात् । श्रुतिस्मृतिसहस्रसिद्धत्वात्सर्वज्ञत्वादेः । उक्तरीत्यैक्याविरोधित्वाच्च । वाच्यस्यापि सत्यत्वादेर्मिथ्यात्वाच्च नाखण्डत्वभङ्ग इति चेत् । न । सत्यादिपदानामखण्डार्थनिष्ठत्वे सत्यत्वादिसाधकप्रमाणाभावात्तस्य मिथ्यात्वम् । तन्मिथ्यात्वेनैव ब्रह्मणोऽखण्डत्वमित्यन्योन्याश्रयात् । जगत इव ब्रह्मणोऽपि मिथ्यात्वापाताच्च । श्रुतेः सत्यत्वादिस्वपदप्रवृत्तिनिमित्तपुरस्कारित्वनियमेन केवलं स्वरूपसद्ब्रह्मेत्यत्र प्रमाणाभावाच्च । भावे वा स्वरूपसत्त्वाख्यधर्मस्य सर्वथा परित्यागासंभवात् । घटो भवति घटत्वं नास्तीत्यस्य क्वाप्यदर्शनात् । स्वरूपसत्पदेनापि ब्रह्म लक्ष्यं चेत्तर्हि स्वरूपसदपि न स्यात् । नहि गङ्गापदलक्ष्यं तीरं गङ्गा । तत्पदवाच्यस्वरूपसत्त्वस्य सर्वथाऽभावे शब्दस्य निरर्थकत्वप्रसङ्गात् । ब्रह्मण्येव भावे लक्षणाऽयोगात् । सखण्डत्वापरिहाराच्च । अन्यत्र सत्त्वे तस्यैव पारमार्थिकत्वप्रसङ्गात् । निर्धर्मकस्य धर्मस्यैवासंभवात् । एतेनाखण्डार्थवादोऽपि गर्भस्रावेणैव गत इति ज्ञातव्यम् । सत्यादिपदानां स्वरूपमात्रपरत्वे एकपदेनैव तल्लब्ध्या पदान्तरवैयर्थ्यापाताच्च । असत्यादिव्यावृत्तेरपि लाभान्न वैयर्थ्यमिति चेत् । किं तत्र व्यावृत्तिलाभो विवक्षितो यत्र कुत्रचिद्वा । नाद्यः । व्यावृत्तिवैशिष्ट्येनैवाखण्डत्वहान्यापत्त्या श्रुतसत्यत्वादिवैशिष्ट्यस्यैव त्यागायोगाच्च । तत्र तमर्थमनादधता तदर्थकेनापि पदेन तत्तेतरव्यावृत्तेर्बोधयितुमशक्यत्वाच्च । अन्यथा तीरे प्रयुज्यमानगङ्गापदेन गङ्गात्ववत्यर्थे शक्तेन तीरेऽप्यगङ्गाव्यावृत्तिलाभप्रसङ्गात् । तीरमतीरमेव स्यादिति स्वस्थः

सखण्डार्थवादः। किंचेयं सर्वाऽपि प्रक्रिया वेदान्तमूलाचार्यस्य सूत्रकृतोऽनभिमतत्वाद्विक्रियैव। तथाहि। "आनन्दमयोऽभ्यासादि"ति सूत्रे प्रतिज्ञातविचारारंभसूत्रम्। तत्र च स्वमतदुराग्रहं विहाय विचारे क्रियमाणे तस्य "प्रियमेव शिर"इत्यादिना सावधारणविषयवाक्येनानन्दमात्ररूपशिरःपार्श्वादिमत्तयोक्तानन्दमयस्य "ब्रह्मविदाप्नोति परमि"ति प्राक्प्रस्तावितपरब्रह्मतैव निर्णीतेति गम्यते। ततश्च ब्रह्मणोऽप्राकृतदिव्याकारत्वस्य स्पष्टं व्यासमतत्वसिद्धिः। आपाततो मयट्प्रत्ययप्राप्तस्यानभिमतविकारित्वमाशंक्य "विकारशब्दान्नेति चेन्न प्राचुर्यादि"ति समादधता तस्याविकारित्वरूपानादिनित्यता चोक्तेति गम्यते। शिरःपार्श्वादेरपि "ब्रह्म पुच्छं प्रतिष्ठे"ति पुच्छतयोक्तब्रह्मसमानयोगक्षेमत्वावश्यंभावेन प्रियमोदप्रमोदानन्दपदोक्तशिरआदिरूपानन्दस्य स्वरूपानन्दत्वमपि सिद्धम्। ततश्चामायिकत्वं मोक्षकालीनत्वं च तस्याऽऽकारस्य गम्यते। नहि शिरःपार्श्वादिकमन्येन, पुच्छंच तद्विजातीयेनान्येनेति कुत्रापि दृष्टम्। अत एवहि लौकिकमाभाणकं "मृण्मयस्य वृषभस्य मृदेव पुच्छं नान्यदि"ति। एवंच ब्रह्मणो निराकारत्ववर्णनं साकारत्ववचनानां मोक्षपर्यन्तमनुवर्तमानज्ञानबाध्याविकाराकारमात्रपरत्ववर्णनं च कथं न विकारः। नच वाच्यं शिरआदिपदमौपचारिकमिति। मुख्ये बाधकाभावात्। तथासति मयट्शब्दार्थस्येवाशंक्य समाधेयत्वापातात्। एतत्प्रायपठिते "तस्येदमेव शिर" इत्युपक्रमवाक्येऽपि तथात्वापातेन दृश्यमानाकारस्याप्यभावापातात्। "स वा एष पुरुषविध एव। तस्य पुरुषविधताम्। अन्वयं पुरुषविधः"इति पुरुषविधत्वस्यैव बहुशोऽवधारणाच्च। नच वाच्यमानन्दमयः कोश एव न ब्रह्मेति। तथासति स्पष्टं सूत्रविरोधात्तद्व्याख्याने प्रवृत्तस्य तव महाविकारत्वापातात्। ननु "गुणे त्वन्यायकल्पने"तिन्यायेन ब्रह्मणः पुच्छत्वप्रतिपादकश्रुतिविरोधान्नानन्दमयस्य ब्रह्मत्वम्। अतः सूत्रमेवान्यथा नेतव्यमिति चेत्। आपाततोऽब्रह्मत्वप्रापकलिंगानां श्रुतिरूपसमस्तविषयवाक्येष्वपि सत्त्वेन सूत्रमात्रस्याप्यन्यथीकरणप्रसङ्गात्। तदभावे पूर्वपक्षस्यैवानुत्थानेन विषयवाक्यत्वायोगात्। विचार्यमाणे विरोधाभावस्त्वत्रापि सम एव। "उद्धवर्हात्मनः केशावि"ति केशतयोक्तकृष्णस्यैव "कृष्णस्तु भगवान्स्वयमि"त्युक्तभगवत्त्वेऽपि मूलरूपस्य भगवतो भगवत्त्ववदुभयोरपि ब्रह्मत्वा-

विरोधात् । नहि तवापि मते एकैकांशभूतस्य जीवस्य ब्रह्मत्वेऽपरिच्छिन्नब्रह्मणोऽब्रह्मत्वम् । अतः कथंचिदपि नोक्तविकारपरिहारः । "अन्तस्तद्धर्मोपदेशात्" "आकाशस्तल्लिंगात्" "अत्ता चराचरग्रहणादि" त्यादावुक्तरीत्या सगुणवादस्य स्पष्टं सूत्राभिप्रायमूलत्वसिद्धेर्निर्गुणवादोऽपि निर्गुणवाद एव । नहि सर्वथाऽविद्यमानेनारोपितेन वा सिद्धान्तयति सूत्रकार इति शक्यते वक्तुम् । "भेदव्यपदेशात्" "भेदव्यपदेशाच्चान्यः" "पृथगुपदेशात्" "शारीरश्चोभयेऽपि हि भेदेनैनमधीयते" "विशेषणभेदव्यपदेशाभ्यां च नेतरौ" "स्थित्यदनाभ्यां च" "अस्मिन्नस्य च तद्योगं शास्ति" "सुषुप्त्युत्क्रांत्योर्भेदेन" "स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि" इति चाधिकरणेषु जीवब्रह्मभेदं स्पष्टं निरूप्य "न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन्" "तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्" इतिच तद्विरुद्धैक्यप्रतिपादकवाक्यानां गतिकथनात् सतात्पर्यं जीवब्रह्मभेदस्समर्थितः । अभेदश्च श्रुतितात्पर्यापरिज्ञानमूलो ज्ञापित इति गम्यते । इन्द्रकर्तृकस्य "प्राणो वा अहमस्म्यृषे" इति प्राणनामकपरमात्मना स्वाभेदव्यपदेशस्य परमात्मसंबन्धबाहुल्यनिमित्तत्वं वदता भवदभिमतमुख्यार्थभूतैक्यस्योपेक्षणं कृतम् । गङ्गासंबन्धिनि तीरे गङ्गापदप्रयोगस्येव लक्षणाख्यगतिश्चोक्ता । लक्षणाया मुख्यार्थबाधमूलत्वेनैक्यरूपमुख्यार्थस्य बाधितत्वं च बोधितमिति कथं न विमर्शवताऽवगम्यते । द्वितीयसूत्रे तु गुणसाम्येन तद्व्यपदेशकथनात् । "सिंहो देवदत्त" इतिवद्गौणस्वरूपगतिकथनं स्पष्टमेव । "अत एव चोपमा सूर्यकादिवदि" ति सूत्रे सूर्यसूर्यकयोरुपमाया एव निर्णीतत्वात् । बिंबप्रतिबिंबयोर्नैक्यं किंतु भेदगर्भितसादृश्यमेव सूत्रकृतोऽभिमतम् । दार्ष्टान्तिकजीवब्रह्मणोरपि तद्वदेव नैक्यम् । ऐक्यव्यपदेशस्तु सादृश्यादेवेति निश्चीयते । अतोऽपि भवदभिमतप्रक्रिया विक्रियैव । "द्युभ्वाद्यायतनं स्वशब्दात्" "आनन्दमयोऽभ्यासादि" ति च सूत्रे ब्रह्मनिष्ठशब्देन सिद्धान्तयता तस्यावाच्यत्वमपि प्रत्युक्तमिति गम्यते । अन्यथा स्ववाच्यस्यैव प्रापकोऽसौ शब्दो न ब्रह्मप्रापकः स्यादिति कथं तेन सिद्धान्तः । "अक्षरमम्बरान्तधृतेः" "जन्माद्यस्य यत" इति सूत्रद्वये जगतोऽसत्यता निराकृतेति गम्यते । अंबरादेरभावे हि तद्धारणस्य सुतरामभावात्केन सिद्धान्तः । जन्मादिसूत्रे चादिपदेन स्पष्टं जगतः स्थितिकथनात्सत्यत्वसिद्धिः । "अथातो ब्रह्मजिज्ञासे" त्या-

दिसूत्रे च करिष्यमाणस्य सर्वस्याप्यस्य विचारस्य मोक्षसाधनत्वप्रतिज्ञानात्सर्वोऽप्ययं परतत्वविचार एव । नाविद्यकदशापन्नयत्किंचिद्विचार इति स्पष्टं निरूपितम । तस्मात्सूत्रार्थपर्यालोचनायां भगवतः पूर्णप्रज्ञाचार्यस्यैव मतं सुमतम् । उक्तरीत्या सूत्राभिमतत्वात् । अन्यत्सर्वं तदनभिमतत्वाद्दुर्मतमेवेति स्थितम् । किंच "अजोऽनुबद्धः सगुणैरजाया गुणात्परं वेद न ते स्वरूपम्" । "सत्वं रजस्तम इति गुणाः प्रकृतिसंभवाः । तेषु हि प्राकृताः प्रोता आब्रह्मस्थावरादयः" "मायामयोऽयं गुणसंप्रवाहो न विद्यते तेऽग्रहणानुबन्धः" "सत्वं रजस्तम इति गुणा जीवस्य नैव मे"इत्यादिना भगवत एव "हरिस्तु निर्गुण"इत्युक्तहरेः सत्वादिगुणवर्ज्जनस्यैव बहुशः समाख्यानाच्च गुणत्रयवर्जनमेव सर्वत्र निर्गुणशब्दार्थ इति गम्यते । "शिवः शक्तियुत"इत्यादिपद्ये शिवस्य "गुणसंवृत"इति सामान्योक्त्या गुणसंवृतत्वमुक्त्वा तत्र च "शक्तियुतस्त्रिलिंग"इति प्राकृतत्वं हेतुमभिधाय "हरिस्तु निर्गुण"इत्युत्तरपद्ये हरेः सामान्योक्त्या निर्गुणत्वस्य तत्र च "प्रकृतेः पर"इत्यप्राकृतत्वहेतोः "स सर्वदृगि"त्यादिना सार्वज्ञ्यादिगुणानां च पृथगेव कथनेन निर्गुणशब्दोऽयं सर्वत्र गुणत्रयाभावपर इति स्पष्टतरं निर्णीतत्वाच्च । त्वदभिलषितनैर्गुण्यपरत्वे चेतनमात्रस्याप्यन्ततो निर्गुणत्वादिदानीं एकस्यापि तद्भावाभावात् । "शिवः सगुणः" "हरिर्निर्गुण"इति विभागायोगाच्च । "तं भजन्निर्गुणो भवेदि"तितद्भजनफलतया निरूपितमुक्तिकालीननिर्गुणत्वमपि "तं यथा यथोपासते तथैव भवति"इति श्रुत्यर्थपर्यालोचनया एतदेव भवेदिति भवदभिमतसर्वधर्मशून्यत्वरूपं निर्गुणत्वं तवैव महातमसि पतितस्य कृतान्तभटकरालकरवालव्याहतस्य स्यात् । यत इदमपि सर्वधर्मशून्यत्वरूपधर्मसदसद्भावाभ्यामभूद्व्याहतम् । "योग्यं योग्येन सह संबध्यत"इति न्यायः । नतु नित्यतया केनाप्यव्याहतायाः श्रुतेरयमभिप्रायः । किंच "योऽविद्ययाऽन्धः स तु नित्यबद्धः विद्यामयो यः स तु नित्यमुक्त"इति भागवते स्पष्टं जीवस्याविद्याबन्धमुक्त्वा ब्रह्मणो विद्यामयत्वोक्तेश्च न ब्रह्मण्यज्ञानम् । ×त्वयाऽप्यज्ञानभ्रमसम्यग्ज्ञानानामेकाश्रयत्वं नियमयता सम्यग्ज्ञानाश्रये जीव एवाज्ञानस्य वक्तव्यत्वाच्च । नच

---

×(त. पु. ९६ प. २०) "अज्ञानभ्रमसम्यग्ज्ञानानामेकाश्रयत्वं नियतं"इति तत्वदीपनम् ।

वाच्यं जीवब्रह्मणोरैक्याद्ब्रह्मण्यज्ञानादपि जीवस्यैवाज्ञानमिति । तेनैव तद्गतसार्वज्ञा-देरपि जीवेष्वनुभवप्रसङ्गात्। कथं चोक्तविधया सर्वज्ञासर्वज्ञयोर्बद्धमुक्तयोर्निर्गुणसगुण-योरैक्यम् । नहि भवति खद्योतः कदाऽपि कल्पान्तानलः । नवा सर्षपखण्डो महा-मेरुः । किंच यस्य हि नामग्रहणमात्रादपि भीतः प्रेतपतिरिति । न यदा तस्यापि तद्भावः । किं वाच्यं तदा तद्भटकृतयातनापात्रस्य जीवस्य न तद्भाव इति । अपिच नित्यबद्धनित्यमुक्ततयोदितयोस्तयोर्न कालान्तरेऽप्यैक्यप्रत्याशा । बद्धत्वमुक्तत्वरूप-विरुद्धधर्मयोर्नित्यतया सर्वदा तत्परिपंथिनोर्जागरूकत्वात् । कथं तर्हि भवतामपि मते जीवस्य नित्यबन्ध इति चेत् । न । एतद्बललब्धनित्यसंसारिणोऽपि सत्त्वात् । मुक्तेऽपि भगवदधीनतारूपबन्धस्य तच्चरणकमलभक्तिबन्धस्य वा सत्त्वाच्च । सा च पत्यधीनता पतिव्रताया इव सुखहेतुरेव । न दुःखहेतुः । प्रत्युत तदपाय एव क्लेशहेतुः । तस्माज्जगदधिष्ठानब्रह्मचैतन्यप्रकाशस्य विरोध्यावरणं युक्तिविरोध्येव । विरोधिनो वृत्तिज्ञानस्य त्वनात्मनीव प्रमाणवैकल्यादेवाप्रसक्तेर्न तत्रावरणापेक्षा । एतेन (पं पु. ११२ प. २) * प्रत्यगात्मनि तु चितिस्वभावत्वात् * इत्यादिपञ्चपादो-क्तिरपि वञ्चनायेति दर्शितम् । कथं तर्हि भवतामपि मते नित्यप्रकाशात्मनो जीव-स्याज्ञानमावरणमिति चेन्न । केह कथंता । अनपिहितार्थविषयीकरणयोग्यस्य स्वत एव प्रदीपप्रकाशस्य घटादिवदावरणसंभवात् । नन्वेवमपि स्वस्वरूपे कथं तस्या-वरणत्वम् । नहि घटः स्वान्तःप्रदीपप्रकाशं विघटयतीति चेन्न । बहिरेव मणि-मन्त्रप्रयोगेऽपि वह्न्यन्तर्व्याप्तदाहकत्वशक्त्युत्कुण्ठनवदीश्वरशक्त्युपबृंहितपिशाचरूपा-विद्यासंबन्धात स्वान्तरपि तस्य विषयीकरणशक्तिकुंठनसंभवात् । नहि कुण्ठिता वह्नेः शक्तिरान्तरं बाह्यं वा निर्दहति । नापि नास्तीत्यस्ति । नन्वेवं तर्ह्यहमित्ये-कांशप्रकाशनमपि न स्यादिति चेन्न । सर्वथा विषयाविषयकज्ञानस्य घटवदज्ञान-त्वापत्त्या एनं मा दहेति प्रयोगे वह्नेरिवेषत्प्रदर्शितकोणराहूपरागे द्युमणेरिव च तस्यापि ईश्वरशक्त्युपबृंहिततच्छक्त्यैवोपपत्तेः । नचैवं सतीश्वरशक्त्यैवालं किमावरणे-नेति वाच्यम् । शक्तस्यापि परमेश्वरस्य स्वेच्छयैव स्वाधीनामपि बाह्यसामग्रीमुपा-दाय प्रवर्तनात् । नहि स्वतन्त्रेच्छा केनचिन्नियंतुं शक्यते । अन्यथा सर्वजनसिद्ध-मण्यादिप्रतिबद्धस्याप्येवमपह्नवप्रसङ्गात् । ईश्वरेच्छायाः सर्वत्र कारणतया सर्वदा-

वर्तमानत्वात् । विस्तृतमेतद्भगवत्पादैरेवेति नात्रास्माभिरन्यार्थं प्रवृत्तैर्बहु वितन्यते । "भर्तुः कर्म भटस्य नोचितमि"ति हि प्राचां वाचः । यच्चोक्तं विवरणे (वि. पु. १०६ प. ७) * अनात्मप्रमाणस्य चैतन्यस्य वैकल्यादावरणादेव विषयानवगतिसिद्धौ न विषये पृथगावरणं कल्पनीयम् * इति । अयं खलु परस्याशयः । घटाद्यधिष्ठानचैतन्यमेव घटादिज्ञानम् । तच्चावृतमतो न घटादि प्रकाशयतीति । तदयुक्तम् । "चैतन्यस्य वैकल्यादावरणादेवे"त्यवधारयता चैतन्यावरणवशादेव घटाद्यनवभासनं वाच्यम् । नतु घटाद्यनवभासनाय विधान्तरम् । "न विषये पृथगावरणं कल्पनीयमि"ति स्ववचनविरोधादेव । चैतन्यावरकस्य चाज्ञानस्य शतशोऽङ्गीक्रियमाणस्यापि (पं पु. १२१ प. २) * अतः सा प्रत्यक्चिति ब्रह्मस्वरूपावभासं प्रतिबध्नाति * इति पञ्चपादिकोक्त्या चैतन्ये तस्मिन्स्वस्वरूपमात्रानवभासकत्वस्य कथंचित्संभवेऽप्यन्यत्र विक्षेपशक्तिमतो घटाद्यनवभासकत्वस्य (पं. पु. १०६ प. २) * सा च न जडेषु वस्तुषु तत्स्वरूपावभासं प्रतिबध्नाति *इति पञ्चपादिकोक्तिविरोधात्कथंचिदप्यसंभवात् । प्रत्युत (पं. पु. १२२ प. २) * अहंकाराद्यतद्रूपप्रतिभासनिमित्तञ्च भवति * इति पञ्चपादिकोक्त्या घटाद्यवभासकत्वस्यैव न्यायप्राप्तत्वात् । अन्यथा जगदादिभ्रमस्यैवानुत्पादप्रसङ्गात् । चैतन्यावरकस्य जगदुपादानस्य चाज्ञानस्य तदानीमप्यावश्यकत्वात् । तस्माद्दोषरूपस्यान्यत्र विक्षेपशक्तिमतोऽज्ञानस्य भ्रमरूपघटाद्यवभासविरोधित्वमष्टंमरसायितम् । एतेनावरणान्तरमविद्याऽवस्थाविशेषो वा भ्रमविरोधीति मन्दाशङ्कापि परिहृता वेदितव्या । चैतन्यावरणवशादेव हि विषयानवगमः । चैतन्यावरणं चैकेनैव कृतमिति किमावरणान्तरेण । "न विषये पृथगावरणम्"इति हि विवरणम् । उक्तरीत्या भ्रमविरोधित्वस्यैव कथंचि[illegible]यसंभवाच्च । किंच स्यादेतदेवम् । यदि घटाद्यधिष्ठानचैतन्यस्य घटादिज्ञानत्वं स्यात् । तदेव तावदनुपपन्नम् । तथाहि । चैतन्यस्य घटादिज्ञानत्वं यदन्प्रष्टव्यः । कस्मादिदमनानुभविकं कल्प्यत इति । दृग्दृश्ययोस्संबन्धान्तरायोगादध्यासरूपसंबन्धघटनार्थं चेत् । तत्र वक्तव्यम् । अध्याससंबन्धविधुरा घटवृत्तिरपि घटज्ञानं भवति न वेति । न तावद्द्वितीयः । घटवृत्त्याऽपि घटाज्ञाननिवृत्त्यापातात् । आद्ये कथं तस्य तज्ज्ञानता । तदाकारत्वादिति चेन्न । तथासति

तत्राप्यावश्यकतत्तदाकारतत्तद्वृत्तेरेव तत्तज्ज्ञानत्वसंभवेनाधिष्ठानचैतन्यस्यापि तज्ज्ञानत्वाङ्गीकारवैयर्थ्यापातात् । तदाकारेण तद्बहार्थं प्रसृतनयनस्यापि घटनयनत्वेन व्यवहारापातात् । घटान्तरस्याप्यपरघटीयत्वापाताच्च । आकारविशेषरहितरूपसंख्यासामान्याभावादिज्ञानानां ज्ञानत्वाभावापाताच्च । परोक्षज्ञानेन चक्षुरादिकरणसहकाराभावेनार्थासंबद्धान्तःकरणस्य तदाकारत्वासंभवेन परोक्षज्ञानस्य तज्ज्ञानत्वायोगाच्च । स्वतो निराकारस्यान्तःकरणस्य कुल्यादिद्वारा बहिर्निःसृत तटाकजलस्य केदारसंबन्धात्तदाकार इव चक्षुरादिकरणद्वारा बहिर्निर्गतस्य तत्तत्करणसंबद्धार्थसंबन्धादेव हि तत्तदाकारः । बाह्ययोर्लिङ्गशब्दयोरान्तरयोस्तज्ज्ञानयोर्वा बहिर्निःसरणद्वारत्वायोगात् । नहि तटाकान्तर्वर्तिसोपानपरंपरा बाह्यपुरद्वारं जलस्य केदारगमनद्वारं वा । किंतूभयसंबन्धि कुल्यैव । तथाऽन्तःकरणबाह्यपदार्थसंबद्धचक्षुरादेरेव त्वयाऽपि द्वारतयोक्तत्वाद्युक्तत्वाच्च । अनुमानप्रामाण्याय व्यवहारहेतुत्वनिर्वाहाय च तस्यापि तत्तज्ज्ञानत्वावश्यंभावाच्च । एवं चाध्यासभिन्नतदाकारस्वरूपान्यसंबन्धस्योक्तरीत्या तत्राप्यावश्यकत्वे तेनैव स्वनिष्ठतया संभावितत्वाश्रितव्यवहारहेतुतया वृत्तेरेव घटादिज्ञानत्वसंभवे स्वासंबन्धिसर्वसाधारणबाह्यचैतन्यस्य तत्तज्ज्ञानत्वकल्पकाभावात् । अतीतादिज्ञानेऽर्थस्यैवाभावेन तदाकारत्वस्य सुतरामभावाच्च । किंच "येन यस्यातिशय उत्पद्यते स तस्य विषय"इति त्वयैव विषयस्य जडावरणाज्ञानखण्डनावसरे निरुक्तत्वात् वृत्तिजन्यं किंचिदतिशयमन्ततस्तत्राप्यावश्यकम् । व्यवहारयोग्यत्वादिकमादाय वृत्तिविषयत्वमेव घटस्य समर्थ्यताम् । एवं सति घटमहं जानामीत्यत्र कर्मणि द्वितीयेत्युक्तद्वितीयाऽपि समर्थिता स्यात् । नहि घटमिच्छति करोतीत्यादौ द्वितीयायास्तदाकारत्वमर्थः । अन्यथा पृथुबुध्नोदरं ममज्ञानमित्यनुव्यवसायाकारापातात् । किंच घटाकारवृत्त्या घटाविद्या निवर्तताम् । चैतन्याविद्या कुतो निवर्तेत । भिन्नविषयत्वात् । यदि च सैव वृत्तिश्चैतन्यमपि विषयीकरोतीति मतम् । तर्हि किमिदं वृत्तेः स्वानध्यस्तनिराकारचैतन्यविषयीकरणं नाम । तदुल्लेखश्चेत् । तर्हि सर्वत्र तेनैव तत्तज्ज्ञानत्वसंभवेन किमनानुभविकाकाराध्यासकल्पनया । किंच कथमिदं नीरूपचैतन्यविषयकत्वं चाक्षुषवृत्तेः । स्वविषयघटानुस्यूतत्वाच्चेत्तर्हि तादृशगगनं गुरुत्वं वा कुतो न विषयः । घटपटसमूहालंबन-

ज्ञानानुव्यवसायवत् घटतदधिष्ठानचैतन्येऽहं जानामीत्यनुव्यवसायापाताच्च । नच वाच्यमिदंत्वेनैव व्यवसायात् तथैवानुव्यवसायो नतु विशिष्येति । तथासति तदविद्यानिवृत्तेरेवायोगात । नहीदन्तामात्रेण ज्ञाने शुक्तेरविद्या निवर्तते । नच वाच्यं वृत्तिप्रतिफलितचैतन्यस्यैव तच्चैतन्यं विषय इति । विरोधिवृत्त्या तदविद्यानिवृत्त्युत्तरकालं हि तच्चैतन्यं चैतन्यस्य विषयः । आवृतशुक्त्यवच्छिन्नचैतन्यस्य तेनाविषयीकरणात् । चैतन्यस्य चाज्ञानानिवर्तकत्वात । प्रत्यक्त्वपराग्भावविरोधेन चितश्चिद्विषयत्वानङ्गीकाराच्च । घटज्ञानतया व्यवह्रियमाणवृत्तिचैतन्ययोस्तादृशव्यवहारे तदाकारत्वतदध्यस्तत्वरूपनिमित्तद्वयकल्पने कल्पनागौरवाच्च । अपि चैवमविद्यानिवृत्त्युपयोगितया यथाकथंचिद्वृत्तेरपि घटीयत्वावश्यंभावेन स्वाश्रितया सर्वजनसंप्रतिपन्नया तयैव घटव्यवहारादिसकलकार्यनिष्पत्तौ किमनेन स्वानाश्रितघटस्थलीयसर्वसाधारणचैतन्यस्य घटज्ञानत्वकल्पनेन । नहि तदादाय घटज्ञानवानहमित्यनुव्यवसायः स्वस्य घटादिव्यवहारो वा संभवति । चैतन्यासाध्याविद्यानिर्हरणसमर्थायाश्च वृत्तेः तत्साध्यव्यवहारहेतुत्वमप्युपपन्नतरम् । चित्साचिव्याभावे जडवृत्तेरर्थप्रकाशकत्वमेव कथमिति चेन्न । अविद्यानिवर्तकत्वस्याप्यभावापातात् । प्रतिफलितचैतन्यसहायादिदं चेत् । तदपि तत एवास्तु । असहायशूरमेववास्त्वंतःकरणम् । स्वत एव चिदचित्संवलनरूपत्वात् । किंच वृत्त्या चैतन्यावरकाविद्यानिवृत्तौ चैतन्यं न घटभ्रमः स्यादपितु तत्प्रमैव स्यात् । भ्रमहेत्वज्ञानरूपदोषाभावात् । अधिष्ठानावरकस्यैव दोषत्वात् । रजतादिभ्रमस्थले तथा दर्शनाच्च । दृग्दृश्ययोरध्याससंबन्धपक्षे तस्यैव चैतन्यस्याधिष्ठानत्वात् । अतद्रूपघटोपादानस्यैवाज्ञानस्य रजतादाविवाधिष्ठानावरणतया दोषतया चाङ्गीकार्यत्वेनाविद्यावैचित्र्येणापि परिहारासंभवात् । किंचैवं सत्यपरोक्षवृत्त्याऽविद्यानिवृत्तौ घटस्यैव निवृत्तिप्रसङ्गाच्चैतन्यं कस्य ज्ञानं स्यात् । स्यात्कथंचिद्घटप्रध्वंसस्यैव । उपादाननिवृत्तावुपादेयनिवृत्तेरावश्यकत्वात् । वृत्त्या चैतन्यावरकाविद्यावस्थाविशेष एव निवर्तते न घटोपादानभूत इति चेन्न । अधिष्ठानावरकस्यैव रजतादाविवातद्रूपोपादानत्वेन चैतन्यावरकावस्थाविशेषस्यैव घटाद्युपादानत्वावश्यंभावात् । "अनात्मप्रमाणस्य चैतन्यस्य वैकल्यादावरणादेव विषयानवगतिसिद्धेर्न विषये पृथगावरणं कल्पनीयमि"ति हि विवरणम् । नहि चरमवृत्त्या स्वसमानविषयकत्वक्षा-

वरकाज्ञाननिवृत्तौ तदारोपितजगदवशेषो दृष्टोऽभीष्टो वा । तज्ज्ञानेऽप्यनिवृत्ताज्ञानस्य कदाप्यनिवृत्तिप्रसङ्गाच्च । अतो यत्किंचिदेतत् । अनिवृत्तौ चाज्ञानस्याऽऽवृतं न तच्चैतन्यं घटप्रकाश इत्युभयथाऽपि भवदभिमतप्रतिकर्मव्यवस्थाया दुरवस्थात्वापातात् । किंचोपादानाज्ञानस्य चैतन्यानावरकत्वे न कदापि तदपरोक्षवृत्त्या निवर्तेत । भिन्न-विषयत्वात् । आवरकत्वे च कथं तदपरोक्षवृत्त्याऽप्यनिवृत्तिः । समानविषयकज्ञाना-ज्ञानयोर्निवर्त्यनिवर्तकभावावश्यंभावात् । अपिच पूर्वाविद्यानिवृत्तावुत्तराविद्याया घटोत्तरकालीनायास्तदुपादानत्वासंभवात् । सकृत्प्रतीतौ पुनर्घटस्यानाविद्यकत्वमेव लब्धमिति सकृत्प्रतीतिरेव घटादेः सत्यत्वसंपादिकेत्यापाताच्च । मृदुपादानत्वशान्न निवर्तते चेत् । तर्हि स्वनिवृत्तावन्यूनानतिरिक्तस्वरूपं घटं प्रत्युपादानताया एव मृषात्वापातात् । असमवायिकारणसंयोगमात्रादपि घटनाशे मृदुपादानस्याकिंचि-त्करत्वाच्च । अन्यथाऽन्तेप्यविद्यानिवृत्तौ जगदनिवृत्तिप्रसङ्गात् । उपादानपरमाणूनां तत्रापि सत्त्वात् । उपादानाविद्यानिवृत्तौ समूलसर्वकार्यनिवृत्तिस्तदा चेदिदानीमपि तादृगविद्यानिवृत्तौ घटमात्रनिवृत्तिः कथं न स्यात् । "सा च न जडेषु वस्तुषु तत्स्वरूपावभासं प्रतिबध्नाती"ति पञ्चपादिकोक्त्या घटावभासनविरोधित्वस्यैवाज्ञाने वक्तुमशक्यत्वात् । (वि. पु. १०६ प. ४) * किंत्वन्यदेवानात्मन्यतिशयकार्यं कृत्वा तद्विषयमज्ञानम् * इति तत्रैवोक्त्या घटावभासनहेतुत्वाख्यविक्षेपस्यैव घटादौ विषये वक्तव्यत्वाच्च । एकस्यैकदैकत्राज्ञानद्वयकल्पनायोगादसंमतेश्च । नहि घटावृतप्रदी-पस्य बहिरप्रकाशाय विरोध्यन्तरमन्विष्यते । तादृशाज्ञानमात्रनिवृत्तावप्युपादान-रूपाज्ञानावरणादेव चैतन्यस्याकिंचित्करत्वतादवस्थ्यात्कथं घटादेरवभासनम । आवृतं च कार्यकारीत्यस्य व्याहतत्वात् । नहि रजतोपादानाज्ञानावृतं शुक्त्यवच्छि-न्नचैतन्यं किंचित्करं दृष्टम् । अन्यथा भवदभिमतावस्थाविशेषावरणे सत्यपि ज्ञान-रूपकार्यप्रसङ्गात् । उपादानरूपावरणं भ्रमोपयोगि चेदिदमपि तथैव स्यात् । तदावरकाज्ञाने तन्निष्ठातद्रूपभ्रमहेतुत्वस्यैव न्याय्यत्वात् । भ्रमहेतोरेवाज्ञानत्वात् । अन्यथा तस्मिन्सति घटावभासनरूपघटवृत्तेरप्यनुत्पादप्रसङ्गात् । स्वानुकूलचैतन्य-विरोधिनस्तस्य स्वप्रतिकूलवृत्तिविरोधित्वस्यावश्यकत्वात् । नहि स्वगोत्रकलहकारी स्वशत्रुं सहते । घटस्यानावरणेन प्रत्यक्प्रतिघातश्चेत्तत एव चैतन्येनाप्युल्लिख्येत ।

तमआवृतचक्षुःप्रकाशेनाप्यालोकस्थघटावभासनदर्शनात् । नच वाच्यमर्थप्रकाशनशक्तिप्रतिबन्धादेवानवभासनमिति । (वि. पु. १११ प. ४) * ज्ञानस्य विषयावभासात्मनोदितस्य स्वकार्ये प्रतिबन्धप्रतीक्षयोरभावात् * इति विवरणोक्तिविरोधात् । (त. पु. ११२ प. २९) * आवरणाभावे नित्यमुक्तत्वप्रसङ्गात्तदैष्टव्यमिति समाधत्ते * इति तत्वदीपनोक्तेर्नित्यमुक्तत्वभियाऽनवच्छिन्नानन्दादौ विषये कथंचित्प्रतिबन्धकत्वकल्पनेऽपि प्रकृते भ्रमरूपसंसारस्यैव स्थिरीकरणेन कल्पकाभावाच्च । नहि स्वकपोलकल्पितप्रक्रियामात्रमघटितस्यापि सर्वस्य कल्पकम् । तथासति शास्त्रस्यादूष्यत्वप्रसङ्गात् । किंच दोषरूपस्याज्ञानस्य तत्वज्ञानात्मकस्वरूपानन्दानुभवमात्रविरोधित्वसंभवेऽपि भ्रमरूपघटाद्यनुभवविरोधित्वासंभवात् । नहि नयनगतकाचपित्तादिकं रजतपीतभ्रमादेः प्रतिबन्धकम् । किंतु शुक्तिश्वेतिमादिप्रमाया एव । भ्रमरूपकार्यान्यथानुपपत्त्या हि तदुपादाननिमित्तादिभावेन कल्प्यमानमज्ञानं कथं भ्रमस्यैवासंपादकम् । (पं. पु. १२२ प. २) * अहंकाराद्यतद्रूपप्रतिभासनिमित्तं च भवति * इति पञ्चपादिकोक्तेः । किंचैवंसति सर्वत्रार्थप्रकाशनशक्तिप्रतिबन्धादेव तत्तदर्थानवभाससंभवेनाज्ञान आवरणत्वशक्तिकल्पनाया एव वृथात्वापातात् । नहि चक्षुष्मत इवान्धस्य वृक्षादेश्चक्षुषा घटादेरनवभासनमन्धकारादितदावरणप्रयुक्तम् । अपिचाविद्यामात्रस्य समानाश्रयविषयापरोक्षप्रमाणवृत्तिनिवर्त्यत्वावश्यंभावेन तस्यैव द्रष्टुस्तत्रैव तदेव तदवशेषस्यास्य स्वाभ्युपगमविरुद्धत्वात् । युक्तिविरुद्धत्वाच्च । नहिप्रमाणवृत्तिर्विवेकवती मन्त्रसामर्थ्यवती वा । येन स्वप्रक्रियाविनाशभिया स्वविरोध्यप्यज्ञानमर्धमवशेषयदेवार्धमपगमयेत् । इतरथा घटपटसमूहालंबनवृत्तेरप्यर्धतदवशेषकत्वप्रसङ्गात् । नापि स्फीतः सौरालोकः समाने देशे सशेषं तमो नाशयन् दृष्टः । अतो युक्तिविरुद्धं च । अस्पष्टपरोक्षवृत्तेः छायास्थालोकवदनिवर्तकत्वेऽप्यपरोक्षवृत्तेः स्फीतातपवत्स्वविरोधिसर्वनिवर्तकत्वस्यैवावश्यंभावात् । अन्यथा (त. पु. १०० प. १४) * अज्ञाततया अनादित्वान्न तज्जनने प्रमाणापेक्षा नापितद्बोधने । विरोधात् * इति तत्वदीपनोक्तेरसङ्गतत्वापातात् । किंच (पं.पु.१२१प.२) * अतः सा प्रत्यक्चिति ब्रह्मस्वरूपावभासं प्रतिबध्नात्यहंकाराद्यतद्रूपप्रतिभासनिमित्तं च भवति * इति पञ्चपादिकोक्तेः (वि. पु. १२१ प. ७)

* अतः कार्यदर्शनोन्नेयमावरणकृत्यं चात्मनि कुर्वाणमज्ञानं भावरूपमेवोभयकारणत्वान्यथानुपपत्त्या कल्प्यत इत्याह * इति विवरणवचनाच्चाविद्यायामावरणविक्षेपाख्यशक्तिद्वयस्यैव निर्णीतत्वेन चैतन्यस्वरूपमात्र आवरणत्वस्यातद्रूपजगति भ्रमहेतुत्वाख्यविक्षेपस्यैव वक्तुं शक्यत्वे भ्रमविरोधित्वाख्यतृतीयकोट्यङ्गीकारस्यास्य स्पष्टं स्वाभ्युपगमविरुद्धत्वात् । नह्यावरणमेवेदम् । उपादानाविद्ययैव चरितार्थत्वापातात् । रजतोपादानाज्ञानेनैवावृतशुक्त्यवच्छिन्नचैतन्यस्य स्वकार्यशुक्तिप्रकाशनादावपटुत्वदर्शनात् । जडावरणानङ्गीकारेणाधिष्ठानावरणस्यैव वक्तव्यतया विपरीतकार्योदयस्यैवौचित्याच्च । एकस्य प्रमया भ्रमनिवृत्तौ पुनरन्यस्य तत्रैव तदैव भ्रमानुवृत्तिदर्शनात् । तस्य तस्य विक्षेपहेत्वविद्यावस्थाविशेषा एव तद्वैचित्र्यं वदताऽपि तेनाङ्गीकृता नतु विभ्रमोपादानत्वस्वभावाज्ञानस्य तत्स्वभावापलापी तृतीयोऽयं प्रकारः । एवं सति भ्रमविरोध्यज्ञाननिवृत्तावेव भ्रम इति भ्रांतघटसिध्या तत्सन्निकृष्टकरणजन्यापरोक्षवृत्तिसिद्धिः । तत्सिद्धौ च भ्रमविरोध्यज्ञाननिवृत्तिरित्यपरिहार्यान्योन्याश्रयाच्च । किंचाज्ञानस्यैव स्वतो भ्रमविरोधित्वे (वि. पु. १०६ प. ७) * अनात्मप्रमाणस्य चैतन्यस्य वैकल्यादावरणादेव विषयानवगतिसिद्धेर्न विषये पृथगावरणम् * इति प्रक्रमविरोधाच्च । नहि विरोधिवशादनवभासे संभवति प्रमाणस्य तस्यावरणलक्षणं वैकल्यमपि वक्तव्यम् । अनावृतं प्रमाणं विषयमुल्लिखेदेवेति चेन्न । विरोधिनि सति पुष्कलस्यापि कारणस्याकिंचित्करत्वात् । नहि विकसदपि नयनं कुड्यप्रतिरोधे सति घटं गृह्णाति । आवरणत्वमेव भ्रमविरोधित्वं चेत् । किमनेनापूर्वेण । उपादानाज्ञानस्यैवावरकत्वात् । चैतन्ये तस्मिन्नतद्रूपावभासविरोधिनस्तस्य सम्यग्ज्ञानस्यैव चैतन्यानुकूलत्वनियमेन तदावरकत्वासंभवाच्च । अत एव (त. पु. १०८ प. १७) * विमतं शुक्त्याच्छादकम् । तत्र विक्षेपहेतुत्वात् * इति तत्त्वदीपने शङ्कोत्थानम् । नहि घटाभावभ्रमविरोधी स्फीतालोकस्तद्भ्रमानुकूलं तम इव घटावरकः । कुत्रापि कदापि भ्रमासंपादकस्य तस्य दोषरूपाज्ञानत्वस्यैवासंभवाच्च । आविद्यकघटभ्रमविरोधित्वे च तस्याज्ञानस्याविशेषात्तदुपादानाज्ञानभ्रमविरोधित्वमपि स्यादेवेति चैतन्येन तेनोपादानाज्ञानमपि नोल्लिख्येत । तथाच ज्ञातैकसदुपादानस्वरूपमेव न स्यात् । नहि रजतभ्रमविरोधिनी शुक्तिप्रमा तदुपादानशुक्त्यज्ञान-

भ्रमविरोधिनी नेत्यस्ति । एवंच निरुपादानो घट एव न स्यादिति किंविषयकभ्रम-विरोधिनी भवदविद्या स्यात् । किंचाज्ञानस्यानादित्वेनानादित आरभ्य विश्वभ्रमासंभवे स्वनिवर्तकवृत्तेरप्यसंभवेन तदनिवृत्तिरेव स्यात् । विश्वं चाभ्रमसिद्धमनादित एव परमार्थसत् स्याद्ततोऽधिष्ठानचैतन्यावरणाज्ञानस्य ततोऽपसरणे विनाशे वा तस्मिन्नेव चैतन्ये कथं तदुपादानकघटावस्थानम् । किंच "अतः सा प्रत्यक्चैतन्यस्वरूपावभासं प्रतिबध्नाति, अहंकाराद्यतद्रूपप्रतिभासनिमित्तं च भवती"ति पञ्चपादिकायां वक्ष्यमाणत्वेनानवच्छिन्नचैतन्येऽज्ञानावरणस्य तत्स्वरूपानवभासकत्वमात्रसंभवेऽप्यतद्रूपघटाद्यवभासोपयोगित्वस्यैव त्वयाऽपि वक्तव्यत्वात् । "अनात्मप्रमाणस्य चैतन्यस्य वैकल्यादावरणादेव विषयानवगतिसिद्धे"रित्याद्युत्तरग्रन्थविरुद्धश्च । स्वनिष्ठानादिज्ञातैकसदज्ञानावभासनहेतोरवच्छिन्नचैतन्यस्य तदुपादानकघटावभासकत्वस्याप्यावश्यकत्वाद्युक्तिविरुद्धश्च । नहि मृद्ग्राहकं चक्षुर्न घटग्राहकम् । नवा घटावरकमपि तमः स्वगतनीलिमादेरावरकमनवभासकं वा । युक्तं चैतत् । अधिष्ठानशुक्त्यज्ञाने तदध्यस्तरजतादिबोधोपोद्बलकत्वस्यैव दर्शनात् । नच वाच्यमवच्छिन्नचैतन्यं न घटाद्यधिष्ठानमिति । दृग्दृश्ययोरध्याससंबन्धस्यापि त्यागापातात् । किंचावृतं चैतन्यं न घटोल्लेखि चेत् । नासौ घटभ्रमः । आवरकाज्ञानस्यानादित्वात् । नापि वृत्तिः । भ्रांतिसिद्धघटेन्द्रियसन्निकर्षजन्यत्वेन तदुत्तरकालीनायास्तस्यास्तद्भ्रमत्वायोगात् । भ्रांतिं विनैव घटादिसत्त्वे चानारोपितत्वेन सत्यत्वापातात् । नच वाच्यमज्ञानोपादानकत्वेनैव मिथ्यात्वसिद्धिरिति । दृष्टिसृष्टिपक्षपरित्यागापातात् । अज्ञानस्यैवाद्याप्यसिद्ध्या तदुपादानकत्वस्य दूरापास्तत्वात् । मृदुपादनकत्वेन सर्वजनसिद्धस्य तस्याज्ञानोपादानकत्वस्यापि कल्पने कल्पनागौरवात् । सोपादानकत्वमात्रे गानित्यत्वलाभेऽपि मिथ्यात्वालाभात् । अनादेः कालादेरमिथ्यात्वापातात् । अज्ञानस्याज्ञानानुपादानकत्वेन शुद्धसाक्षिविषयत्वेन चानन्दादिवत्संभावितसत्यत्वस्य स्वोपादेये मिथ्यात्वासमर्पकत्वाच्च । नच शुद्धसाक्षिविषयत्वमसिद्धम् । अज्ञानस्य प्रातीतिकतयाऽङ्गीकृतस्य स्वोल्लेखात्पूर्वमविद्यमानत्वेनोल्लिखतः साक्षिणः शुद्धत्वाहानेः । ननु गृह्यमाणमेवाज्ञानं जपाकुसुममिव साक्षिणः स्वोपरागाख्यं दोषमाधास्यतीति चेन्न । साक्षिणा गृह्यमाणमज्ञानं स्वयंसत्साक्षिणि दोषाधायकं दोषाधाने

च दोषिणा तेनाज्ञानग्रहणे ज्ञातैकसदज्ञानमित्यन्योन्याश्रयात् । जपाकुसुमे तु लौहित्यं न स्फटिकसमागमसापेक्षमिति नान्योन्याश्रयः । नहि कर्दमस्पर्शसमसमयसंभूतकरार्द्रता कर्दमस्यैवार्द्रतायामुपयुज्यते । अस्तु तर्हि बाध्यत्वेनैव सर्वत्र मिथ्यात्वमिति चेन्न । अनारोपितत्वे ब्रह्मवद्बाध्यत्वस्यैवायोगात् । बाध्यस्य शुक्तिरूप्यादेरारोपितत्वनियमाच्च । त्रैकालिकनिषेधप्रतियोगित्वस्यैव बाध्यत्वमिथ्यात्वरूपतया साध्यावैशिष्ट्याच्च । अनारोपितस्यापि श्रुत्या बाध्यत्वसिद्धिरिति चेत् । न । श्रुतेरपि दृष्टानुसारेणैवार्थबोधकत्वात् । अन्यथा यजमानप्रस्तरत्वं यागस्यैव वा साक्षात्स्वर्गसाधनत्वं श्रुतिः कुतो न बोधयेत् । अस्तु तर्हि सर्वत्र दृश्यत्वेनैव बाध्यत्वापरपर्यायमिथ्यात्वस्यैव सिद्धिरिति चेत् । न । अनारोपिते जगति युक्तिशतकेनापि मिथ्यात्वस्य साधयितुमशक्यत्वात् । किंच किमिदं दृश्यत्वं वृत्तिव्याप्यत्वं वा चिद्व्याप्यत्वं वा दृशो द्वैविध्यादेव । नाद्यः । निष्प्रकारकप्रमारूपचरमवृत्तिविषये ब्रह्मचैतन्य एव स्वद्रीत्यापि व्यभिचारात् । नहि चरमवृत्तेश्चैतन्यातिरिक्तं विषयः । अप्रमात्वापातात् । अखण्डार्थनिष्ठस्वरूपमात्रपरवेदान्तवाक्यश्रवणजायास्तस्याः ब्रह्मस्वरूपमात्रपरत्वावश्यंभावाच्च । विषयविषयिभावानिरुक्त्या ब्रह्मणो वृत्तिव्याप्यत्वाभावे तत एव जगतोऽपि तन्नेत्यसिद्धिः । तदाकारवृत्तेरपि ब्रह्मघटयोः साम्येन "येन यस्यातिशय उत्पद्यते स तस्य विषय"इत्यादिना विवरण एव निरुक्तत्वाच्च । घटाधिष्ठानचैतन्ययोरिव वृत्तिघटयोरध्याससंबन्धानुपपत्त्या तत्तद्वृत्तित्वनिर्वाहाय वृत्तिं प्रति विषयत्वस्यैव त्वयाऽपि निर्वक्तव्यत्वाच्च । "अन्यदेव तद्विदितादथो अविदितादधि" "असङ्गो ह्ययं पुरुष"इत्यादिश्रुतिविरोधान्न ब्रह्मणो वृत्तिविषयत्वमतो न व्यभिचार इति चेन्न । वृत्तिविदितत्वे च घटादीनामधिष्ठानचैतन्यस्यापि तज्ज्ञानत्वकल्पकाभावाद्घटादीनामप्यधिष्ठानचैतन्येनैव विदितत्वं त्वन्मत इत्यसिद्ध्यापातात् । तदविषयकवृत्त्या तदविद्यानिवृत्त्ययोगाच्च । एतच्छ्रुत्यैव ब्रह्मणो विदितत्वे श्रुतेः स्वव्याहतिप्रसङ्गात् । अविदितत्वे श्रुतेर्ब्रह्मणि स्वार्थासाधकत्वप्रसङ्गादेव । नहि नदीतीरे पञ्च फलानि संतीति वाक्यं स्वविदिते नदीतीर इव स्वाविदिते पर्वताग्रेऽपि तानि साधयेत् । किंच विदितादन्यदिति पूर्वार्धेन विषयत्वनिरासश्चेत्तर्ह्यविदितादन्यदित्युत्तरभागेन द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत इति न्यायेन विषय-

त्वस्यैव कुतो न पुनः प्रसवः । एवं तर्हि श्रुतेः परस्परविरोध इति चेत् । तद्धवि-रोधाय ब्रह्मणो दृष्टादृष्टप्रपञ्चभिन्नत्वमेव तदर्थोऽस्तु । त्वदभिलषितार्थाङ्गीकारे वि-रोधपरिहारोपायाभावात् । एकेनापरबाधे च परेणैव पूर्वबाधोऽस्तु । अन्यथा "दृष्ट्वैव तं मुच्यते नापरेण" "आत्मा वाऽरे द्रष्टव्यः" "तमेवं विद्वानमृत इह भवति" इत्यादिश्रुतिशतविरोधापातात् । मद्रीत्या व्यभिचारस्यापरिहार्यत्वाच्च । ततश्च "ज्ञानेन समानाश्रयविषयं भावरूपमज्ञानं सिद्धमि"ति विवरणोक्तिविरोधापाताच्च । नहि ज्ञानाविषयत्वे ब्रह्मणो ज्ञानसमानविषयत्वमज्ञानस्य वक्तुं शक्यते । इतश्च चरमवृत्तिविषयत्वं शुद्धचैतन्यस्यैवेति गम्यते । "ज्ञानेन समानाश्रयविषयमज्ञानमि" त्युक्तेः । न ह्यज्ञानस्य चैतन्यातिरिक्तं विषयः । ×"आश्रयत्वविषयत्वभागिनी निर्वि-भागचितिरेव केवले"ति स्वोक्तिविरोधात् । अधिष्ठानाध्यस्तभावस्य लक्ष्यलक्षक-भावस्य च शुद्धचैतन्य एवाङ्गीकारेणैतच्छुत्यैव सङ्गे व्याहतेरसङ्गे उक्तार्थासिद्ध्य-पातेन च त्वयाऽप्यसङ्गश्रुतेः कर्मलेपाभावमात्रार्थकत्वस्य वाच्यत्वाच्च । न ह्यज्ञानादि जगदारोपे शुद्धादन्यदधिष्ठानम् । नापि स्वरूपमात्रलक्षणपक्षे शुद्धं न लक्ष्यम् । किंचान्याविषयकनिष्प्रकारकचरमसाक्षात्कारस्य ब्रह्मापि न विषयश्चेन्निर्विषयं तज्ज्ञानमेव न स्यात् । अतो न तदप्यज्ञाननिवर्तकमित्यनिर्मोक्षप्रसङ्गात् ब्रह्मैव तद्विषयो वाच्यः । तस्मात्सुस्थो दृश्यत्वहेतोर्ब्रह्मणि व्यभिचारः । द्वितीयेऽपि किं साक्षाद्वृत्तिव्याप्यत्वं विवक्षितमुत परंपरया । नाऽऽद्यः । घटादिप्रपञ्चे ममासिद्धेः । मामहं जानामीति साक्षिवेद्य आत्मतत्त्वे मद्रीत्या व्यभिचाराच्च । त्वन्मतेऽपि मते घटा-दिभ्रमरूपे घटाद्यधिष्ठानचैतन्येऽधिष्ठानानुल्लेखिभ्रमासंभवादधिष्ठानभूतचैतन्यस्या-प्युल्लेखावश्यंभावेन तत्रैव व्यभिचारात् । नहि निरालम्बनभ्रमवादी भवान् । नीरूप-साक्षिचैतन्यस्य चाक्षुषापरोक्षवृत्त्यविषयत्वेन चैतन्य एव तदुल्लेखावश्यंभावात् । एकस्यैव मुखस्य बिंबप्रतिबिंबभाववत्प्रत्यक्परागभाववच्चैकस्य चैतन्यस्य विषयविष-यिभावाङ्गीकारेऽपि बाधकाभावात् । सुखमहमनुभवामीत्यादिसाक्षिरूपानुभवेऽहमिति साक्षादात्मतत्त्वस्यैव प्रतिभासेन व्यभिचाराच्च । विशिष्ट एवात्मा साक्षिविषयो न केवल इति चेत् । किं तेन तथापि विशेष्यतया केवलस्यापि विषयत्वावश्यंभावेन

---

×संक्षेपशारीरके प्रथमाध्यायगत ३१९ तमपद्यमिदम् ।

व्यभिचारतादवस्थ्यात् । नहि दण्डीतिज्ञानस्य देवदत्तो न विषयः । अन्याविषयक-चैतन्यविषयत्वस्य च घटत्वदेशकालादिविषयकभ्रमविषये घटेऽप्यभावेन पुनरसिद्धेः । न ह्ययं घट इत्यादौ घटमात्रं भासते । मामहं न जानामीति त्वदभिमतभावरूपा-ज्ञानज्ञाने साक्षिणि मामित्यज्ञानावच्छेदकनिर्विशेषचैतन्यस्योल्लेखाङ्गीकारेण त्वदुक्त-रीत्यैव व्यभिचाराच्च । न ह्यज्ञानावच्छेकं चैतन्यातिरिक्तेन ज्ञायते । प्रमाणवृत्तिवि-रुद्धत्वादज्ञानस्य । सर्वत्र चितश्चिदवभास्यत्वमेव न विषयत्वमिति चेत् । तर्हि दृग्दृश्ययोः संबन्धानुपपत्तिपक्षे दृगध्यस्तत्वमेव दृश्यस्य न दृग्विषयत्वमित्यसिद्धिः । अवभास्यत्वातिरिक्तविषयत्वाभावात् । उक्तरीत्या बाधकाभावाच्च । किंच दृग्दृश्य-योः संबन्धान्यथानुपपत्त्याऽध्यासमेव संबन्धं वदतस्तव मते चिद्व्याप्यत्वं नाम चिदध्यस्तत्वमेवापतितमिति कथमिदं साध्याविशिष्टं तत्रैव हेतूक्रियते । तस्मादवि-चारितरमणीयैवेयं परपरिकल्पितप्रक्रिया । न द्वितीयः । अखण्डार्थनिष्ठवाक्यश्रवण-जन्यवृत्त्यनुव्यवसायरूपसाक्षिविषयेऽखण्डात्मन्येव व्यभिचारात् । इतरथा त्वदुक्त-मर्थमज्ञासिषमिति कथं प्रतिब्रूयात् । साक्षात्साक्षिविषये ज्ञानाज्ञानसुखदुःखादाव-सिद्ध्यापाताच्च । त्वदभिमतदृग्दृश्यसंबन्धाघटकत्वेनाप्रयोजकत्वाच्च । अतएव न जडत्वादिनाऽपि तत्सिद्धिः । किंचोक्तरीत्या घटसन्निकृष्टचक्षुर्जन्यापरोक्षवृत्त्याऽनाद्य-ज्ञाने निवृत्ते तदुत्तरकालं घटावभासनसमर्थस्याधिष्ठानचैतन्यस्य प्राक्सिद्धघटकल्प-कभ्रमत्वानुपपत्त्याऽन्यस्य चाध्यासाख्यत्वदभिमतसंबन्धार्हभ्रमस्य सुतरामसंभवेन घटादिप्रपञ्चस्यापि ब्रह्मवदनध्यस्तत्वावश्यंभावादनध्यस्तयोश्च ब्रह्मजगतोर्जडाजडत्वा-दिना वैलक्षण्यमात्रसिद्धावपि मिथ्यात्वासिद्धेः । नहि जडत्वादिकं मिथ्याभूत-शुक्तिरजतसाधारणमित्येतावताऽनध्यस्तस्यापि घटादेर्मिथ्यात्वं साधयेत् । तथासति शुक्तिशकलसाधारणमधिष्ठानत्वं त्वद्रीत्या ब्रह्मणोऽपि कुतो न मिथ्यात्वसाधकम् । घटादिजडपदार्थसाधारणं पदार्थत्वं वा कुतो न ब्रह्मणो जडत्वादिसाधकम् । चेत-नस्य सतो जडत्वं विरुद्धं चेत्तर्ह्यनध्यस्तस्य सतो मिथ्यात्वमपि विरुद्धमिति संतो-ष्टव्यम् । अतएव मिथ्यात्वप्रतिपादकतया प्रतीयमानश्रुतिवचनानामप्यर्थान्तरमाव-श्यकम् । उक्तरीत्या ब्रह्मण इवानारोपितस्य स्वभावसिद्धस्य जगतः प्रमाणशतेना-प्यन्यथीकर्तुमशक्यत्वात् । न ह्यनारोपसिद्धो घटः श्रुतिशतेनापि पटः क्रियते ।

नापि तथाविधो यजमानः श्रुत्याऽपि प्रस्तरीक्रियते। श्रुतिबाधाच्च ब्रह्ममिथ्यात्वसिद्धिरिति चेत । तर्हि तत एव न जगन्मिथ्यात्वसिद्धिरपि । सत्यत्वश्रुतेरुभयत्र साम्यात् । सत्यत्वश्रुतेरेव बाधोऽप्युभयत्र समः । किंच किमेतदनुमानविरोधाच्छ्रुतिबाध उत श्रुत्यंतरविरोधात् । नाद्यः । अन्योन्याश्रयात् । न द्वितीयः । प्रत्यक्षादिसहकृताऽऽत्मश्रुत्यैव तच्छ्रुतिबाधसंभवात् । नहि घटास्तिताप्रमया तदभावभ्रमो न बाध्यते । नवा पूर्वेणैव शिष्टवचनेनोत्तरमुन्मत्तवाक्यं न बाध्यते । इतरथा "असदेवेदमग्र आसीदि"त्यादिश्रुत्या ब्रह्मसत्यताश्रुतिरपि बाधिता स्यात् । एतेन विमतं घटादिकं घटो वा परमार्थसन् अनारोपितस्वरूपत्वात् ब्रह्मवदिति प्रत्यनुमानमपि सूचितमिति द्रष्टव्यम् । तस्मादष्टमरसायितमनारोपितजगतो मिथ्यात्वम् । किंच-घटाद्यवच्छिन्नचैतन्यं न जीवचैतन्यम् । अन्तःकरणाद्यनवच्छिन्नत्वात् । किंतु ब्रह्मचैतन्यमेव । तत्र च घटः सर्वदा भासताम् । किं तदसंभावितावरणकल्पनया । कथं तर्हि ग्रहणाद्व्यवहाराज्ञानादिकमिति चेत् । न । अधिष्ठानब्रह्मचैतन्यस्य सर्वज्ञतया न कथंचिन्, जीवस्य तु स्वसाक्षिणि स्ववृत्तौ वा घटादेरनवभासादेव । अधिष्ठानावरकाज्ञानाभावे कथं घटाध्यास इति चेत् । किमध्यासपदेन घटादिज्ञानमुच्यते । उत घटादिरूपोऽर्थः । नाद्यः । चैतन्यप्रकाशस्वभावादेवोपपत्तेः । नहि दीपः स्वप्रभयाऽर्थप्रकाशने तमःसाचिव्यमपेक्षते । त्वयाऽप्यर्थप्रकाशनार्थमविद्यानिवृत्तेरेवाश्रितत्वाच्च । दोषो हि जन्यज्ञाने कथंचिदपेक्ष्यते । नित्यज्ञाने तु साक्षिणि किमनुपकारिणा तेन । अतो दोषतयाऽपि न तस्योपयोगः । न द्वितीयः । अज्ञानवदेवोपपत्तेः । नहि चित्यज्ञानरूपार्थाध्यासघटनार्थमज्ञानमनुश्रियते । निर्विशेषचिदाश्रितत्वाङ्गीकारात् । अज्ञानाभावे कथं निरुपदाना घटादिसृष्टिरिति चेन्न । मृदाद्युपादानस्य सर्वजनसिद्धत्वात् । त्वयाऽपि "यथा सोम्यैकेन मृत्पिंडेने"त्यादिश्रुतिव्याख्यानसमये मृदुपादानत्वस्यैवाङ्गीकृतत्वाच्च । कथं तर्हि घटादेर्मिथ्यात्वमिति चेत् । तद्धि त्रैकालिकनिषेधप्रतियोगित्वम् । तच्च तदर्थप्रतिपादकप्रमाणसद्भावे स्यान्नो चेन्न स्यादेव । तत्र किमज्ञानेन । यच्चानात्माज्ञानपक्षे दूषणमुक्तं ×अज्ञान-

×(त. पु. १०९ प. २५) "एकाज्ञानवादे तन्निवृत्तावज्ञानाननुभवप्रसङ्गोऽतःशब्दार्थः । कल्पनागौरवप्रसङ्गान्न भेदकल्पने"त्यस्य प्रतिपदमिदम् ॥

स्यैकत्वे पुनस्तत्र भ्रमानुपपत्तिप्रसङ्गः। अनेकत्वे कल्पनागौरवमिति। तच्चैतन्याज्ञानपक्षेऽपि समानम्। †एकस्यैवावस्थावैचित्र्येण समाधानमनात्मन्यपि समानम्। शुक्तिमहं न जानामीति कल्पनामूलप्रत्यक्षस्य सार्वजनीनत्वात्। त्वदभिमतशुक्त्यवच्छिन्नचैतन्यनिष्ठाज्ञाने शुक्तिमात्रकल्पकत्वेऽपि तच्चैतन्यदेहान्तःकरणादिकल्पकत्वस्य त्वद्रीत्यैवाभावेनैतावन्तं कालं शुक्त्यवच्छिन्नचैतन्यमहं नाज्ञासिषमिति तस्यैवानुभवासंभवेनोक्तरीत्याऽन्येषामेतादृशानुभवादर्शनेन च तवैव कल्पनागौरवम्। तस्मान्न वस्तुतत्त्वविवरणमिदं विवरणं किंतु स्वाज्ञानविजृंभणविवरणमेवेत्यलमतिप्रसङ्गेन। अपिच स्वावरकाज्ञाननिर्हरणाय प्रागेव विद्यमानार्थसन्निकर्षसापेक्षापरोक्षवृत्तेरुत्तरत्र घटाद्यर्थमुल्लिखत्तत्तदधिष्ठानचैतन्यं न तेषां कल्पको भ्रमः। अर्थानां प्रागेव सिद्धत्वात्। नापि तत्तदपरोक्षवृत्तिस्तत्तद्भ्रमः। सन्निकर्षघटकतयाऽर्थानां प्रागेव सत्त्वात्। नापि योगप्रभावोपोद्बलितम्। अतएव सन्निकर्षानपेक्षं योगिप्रत्यक्षमेव विश्वभ्रमः। तदुदयादपि प्रागेव सतां महीमहीधरादीनां स्वदेहगेहादीनां स्वोत्पत्त्यनन्तरमपि योगप्रभावात्प्रागस्मदादिवत्तैरेव दृष्टानां योगप्रभावोत्तरकालेऽपि सन्निकृष्टाक्षैरेव गृहीतानां स्वसमीपस्थपदार्थानां च तद्भ्रमकल्पितत्वायोगात्। विप्रकृष्टपदार्थानां चार्थसन्निकर्षमात्रासंभवेऽपि समीपस्थपदार्थवत्प्रागेव तत्र तत्र सतामुल्लेखो नतु शुक्तिरूप्यादीनामिव तत्रासताम्। एवं सति योगजधर्मस्य काचादिदोषवत् भ्रमहेतुत्वापातात्। तथाच साधु समाहितं योगशास्त्रम्। यतोऽविद्याकामकर्मजनिताहंममतादिसांसारिकनानाभ्रमविच्छेदमूलसाधनं योगं विश्वभ्रमे विनियुङ्क्षे। किंचतादृशयोगप्रभावोपेतस्तव योगीश्वरो वा घटं कपाल इव तंतावपि कुतो न पश्येत्। तवाविद्यमानत्वाच्चेत्तर्हि तत्र तत्र विद्यमानत्वमपि योगिनामीश्वरस्य च दर्शन उपयोगीत्युक्तं स्यात्। तथाच न ते भवदुपकाराय भ्राम्येरन्। एतेनेश्वरप्रत्यक्षवृत्तिरेव विश्वभ्रम इत्यप्यपास्तम्। "य ईक्षिताऽहं रहितोऽप्यसत्सतोः स्वतेजसाऽपास्ततमोभिदाभ्रम" इति भागवतोक्तिविरोधात्। किंचिद्भ्रान्तेभ्योऽस्मदादिभ्योऽप्यखिलजगद्द्रष्टृतया त्वद्रीत्या महाभ्रान्ते तस्मिन्नीश्वरत्वस्यैवाभावप्रसङ्गाच्च।

---

†(वि. पु. १०९. प. ६) "मूलाज्ञानस्यैवावस्थाभेदाः रजताद्युपादानानि शुक्तिकादिज्ञानैः सहाध्यासेन निवर्तन्ते" इत्यनेनेत्यर्थः॥

स्वाश्रयाव्यामोहकमायाश्रयत्वेनाभिमतस्य तस्य भ्रांतेरेवायोगेन निर्दोषसर्वज्ञतद्दृष्टिदृष्टे जगति मायाविनिरिक्तलिप्तैन्द्रजालिकवदारोपितत्वस्याप्यसंभवेन कथं नानारोपितं जगत् । घटाद्यधिष्ठानचैतन्येन घटादिवृत्तिभिर्वा मायया वा जगदारोपस्यासंभवात् । प्रकारान्तरेण जगदारोपस्य परेणाप्यनङ्गीकारात् । किंचांतःकरणकालाद्यनपेक्षस्यानाद्यविद्यापरिकल्पस्य चैतन्यरूपभ्रमस्येदंपूर्वकत्वासंभवेन तन्मात्रसिद्धस्य जगतोऽप्यनादित्वप्रसङ्गात् । अन्यथा चिन्मात्रभ्रमसिद्धाविद्याया अप्यनादित्वासंभवात् । अविद्याऽनादितोऽप्यस्ति न जगदिति चेत् । किं भ्रमादस्ति? उत स्वरूपेण? नाद्यः । जगतोऽपि साम्यात् । न द्वितीयः । एवं सति तस्या एव सत्त्वापत्त्या तदुपादानकजगतोऽपि सत्त्वप्रसङ्गात् । अध्यासस्याज्ञानोपादानकपदार्थमात्रविषयत्वनियमस्त्वज्ञान एव भग्नः । अज्ञानस्य स्वयमेव दोषतया दोषरूपतदपेक्षायामपि स्वस्यैव स्वोपादानत्वायोगेनोपादानतयाऽज्ञानान्तरापेक्षाया अवर्जनीयत्वात् । अनादित्वेन तदनपेक्षा तूभयत्र समा । नन्वज्ञानानुपादानकत्वे जगदध्यासस्य कथं ज्ञानेन निवृत्तिरिति चेत् । मास्तु तर्हि ज्ञानेन निवृत्तिः । तदुपादानकस्यापि घटादेः मुद्गरेण निवृत्तिदर्शनात्तदुपादानकजगतोऽन्येन निवृत्तिः कुतो नेष्यते । "भूयश्चान्ते विश्वमायानिवृत्ति"रिति श्रुतिस्तु विश्वभ्रमहेतुभूतमायामात्रनिवृत्तिपराऽस्तु । ज्ञानेनाज्ञाननाशे तन्निमित्तभ्रमविच्छेदेन भ्रांतिमात्रसिद्धजगन्नाशसंभवाच्च । अपिचावृतस्य ब्रह्मचैतन्यस्य घटाधिष्ठानचैतन्यसमानयोगक्षेमतयाऽनावृतस्य च दोषासहकृतत्वेनोभयथाऽपि विश्वभ्रमत्वायोगाच्च । अनाद्यज्ञानवादे तदानीमनावृतस्यैव तस्य मध्य आवृतत्वासंभवाच्च । अधिष्ठानावरकस्यैवाज्ञानस्य तत्तद्भ्रमहेतुत्वस्य रजतभ्रमादौ दर्शनाच्च । इदानीं सृज्यमानघटादिभ्रमत्वस्य सर्वथाऽयोगात् । किंचेश्वरः सर्वविषयकापरोक्षज्ञानवान्नवा । न तावद्द्वितीयः । उक्तवचनविरोधात् । विचित्रानन्तजगत्कर्तुः सार्वज्ञावश्यंभावाच्च । त्वयाऽपि श्रुत्युक्तसर्वज्ञतायाः कथंचिन्निर्वाह्यत्वाच्च । नच वाच्यं भ्रांतिसिद्धजगन्मात्रदृष्टृत्वेनैव तस्य सार्वज्ञम् न परतत्त्वद्रष्टृत्वेनेति । "सर्वात्मा सर्वदर्शनः" "स सर्वदृगुपद्रष्टे"ति प्रागुक्तासंकुचितसर्वद्रष्टृत्वार्थकवचनेषु वृथा संकोचाश्रयणापातात् । "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदान्प्रहिणोत्यस्मा"इत्यादिश्रुतिस्मृतिप्रलान्मूलरूपेणानन्तवेदद्रष्टुरशेषतत्त्वोप-

बृंहितपञ्चरात्रस्तु रवतारेषु च हयग्रीवादिरूपेण ब्रह्मादीन्प्रति सकलतत्त्वसारसंग्रहानन्तवेदोपदेष्टुर्वेदव्यासरूपेण चतुर्वेदविभागस्य श्रीकृष्णरूपेण चार्जुनादीन्प्रति साक्षाद्गीतोपनिषदर्थकगीतादिशास्त्रभागस्य "तेषामेवानुकंपार्थमहमज्ञानजं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता" इतिवचनात्परतत्त्वावरकाज्ञानतमःखण्डनप्रचंडस्य किं बहुना । व्यासरूपेणैव भवद्व्याख्येयब्रह्ममीमांसाप्रणयनादज्ञानतमःसमुन्मूलनेऽतिशौण्डमार्तण्डस्य नारायणस्य न परतत्त्वविषयिणी दृष्टिरिति वदंस्त्वमन्धे तमसि कथं न पतेः । नाऽऽद्यः । अशेषविशेषविशिष्टतया दृष्टाधिष्ठानपरमेश्वरदृष्टिगोचरप्रपञ्चस्य कदाऽप्यबाध्यत्वावश्यंभावेन न परमेश्वरदृष्टं जगद्भ्रांतिसिद्धम् । किंतु तत्र शास्त्रमेवेदं भ्रांतिनिबद्धम । एतेनापि मास्तु तद्ध्यारोपितत्वं प्रतिपन्नोपाधौ निषेधप्रतियोगित्वरूपबाध्यत्वेनैव मिथ्यात्वं सेत्स्यतीति निरस्तम् । विद्यमानविशेषविशिष्टतयाऽधिष्ठानापरोक्षप्रमा हि बाधः । स च सर्वज्ञतया दृष्टाधिष्ठानविशेषपरमेश्वरदृष्टिगोचरे जगति नावकाशं लभत इत्यबाध्यत्वंस्यैव लाभात् । नच परमेश्वरस्यापि दग्धपटायमानं किंचिदज्ञानमस्ति, अतो न सम्यगधिष्ठानज्ञानमिति वाच्यम् । "विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया । विमोहिता विकत्थन्ते ममाहमिति दुर्धियः" इति भागवतोक्त्या भगवद्दृष्टिपातस्थलेऽपि स्थातुमसमर्थस्य तस्य भगवति लेशतोऽप्यवस्थानस्य दूरापास्तत्वात् । उक्तवचनैरसंकुचितसर्वद्रष्टुरनन्तवेदोपदेष्टुरसंख्येयपञ्चरात्रपुराणभारतब्रह्ममीमांसाकर्तुः स्वध्यातृजनाज्ञानगहनस्याप्यपहर्तुरमेयज्ञानैकापनोद्यसंबन्धच्छेत्तुः कर्तुमकर्तुमन्यथाकर्तुं समर्थस्य स्वदर्शनमात्रेण परिहृताज्ञानविपर्ययसर्वसंशयपापाद्यनर्थस्य परमेश्वरस्याल्पमप्यज्ञानं प्रलयाग्निदग्धभस्मीभूतकल्पान्तमारुतोद्धूतपटायमानमित्येव वक्तुं युक्तम । "भिद्यते हृदयग्रन्थिच्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि दृष्ट एवात्मनीश्वरे" इति हि स्मृतिः । तादृशाज्ञानस्यास्थिरस्वविषयभ्रममात्रसंपादकस्य परतत्त्वज्ञानाप्रतिघातकत्वाच्च । नहि दग्धः पटः शीतातपवातापहारी । किंतु स्वात्मनि पटभ्रममात्रहेतुरेव । कथं तर्हि भवतामपि मते जीवन्मुक्तानामवस्थानमिति चेत् । प्रारब्धकर्मवशादिति ब्रूमः । तेषां च भोगैकनाश्यत्वादेवावस्थानम् । तत्त्वज्ञानकृततदज्ञानप्रतिबन्धादिति शास्त्र एव निर्णीतत्वात् । अपिचाल्पतरस्य तस्य कदाचित्क्वचित्किंचिद्भ्रममात्रहेतुत्वसंभवेऽपि

सार्वदेशिकसार्वकालिकसकलपदार्थविषयदीर्घभ्रमहेतुत्वायोगात् । असंभावनाविपरीतभावनामात्रनिवर्तकपरोक्षज्ञानरूपमनननिदिध्यासनानिवर्त्यस्येश्वरेण जनितापरोक्षज्ञानमात्रनिवर्त्यस्येश्वरे कस्मान्न निवृत्तिः । नहि तस्य स्वसृष्टस्वविनेयजनेषु कश्चिदुपाध्यायीकृत्य स्वोपदिष्टविद्याभ्यासः केनापि शक्यते वक्तुम् । कथं तर्हि सांदीपनिमुखात्तस्य विद्याभ्यास इति चेन्न । मनुष्यविडंबनार्थत्वात् । उक्तं हि भागवते "प्रभवौ सर्वविद्यानां सर्वज्ञौ जगदीश्वरौ । नान्यसिद्धमलं ज्ञानं गूहमानौ नरेहितैः । अथो गुरुकुलावासमिच्छंतावुपजग्मतुरि"ति । नच वाच्यं न परमेश्वरोऽस्तित्वाधारतया जगत्पश्यतीति । एवं तर्हि तस्याभ्रांतत्वेन त्वन्मते जगत्कल्पकाभावप्रसङ्गात् । जगन्नाशकहिरण्याक्षादिदैत्यवधार्थमवतारायोगाच्च । तस्मात्सर्वविषयकनिर्दोषपरमेश्वरदृष्टिदृष्टमत एव बाधकत्वेनाभिमताधिष्ठानविशेषापरोक्षप्रमायामप्यस्तितया प्रमितमिदं विश्वमबाध्यमेवेति । तथाच प्रयोगाः । घटः परमार्थसन् अबाध्यो वा दृष्टाधिष्ठानविशेषस्य परमेश्वरस्यास्तित्वप्रकारकदृष्टिविशेष्यत्वात्तादृशपरमेश्वरेणास्तित्वाधारतया प्रतीतत्वात्, चक्षुःसंयोगित्वात्, मृदुपादानकत्वात्, रूपवत्त्वात्, पृथुबुध्नोदराकारत्वात्, अस्मदाद्यपरोक्षवृत्तिविशेष्यत्वात्, अज्ञाननिवृत्तावप्यवशिष्यमाणत्वात्, घटपदार्थत्वात्, अर्थक्रियाकारित्वात्, कारणत्वात्, व्यतिरेकेणारोपितघटवदित्यनुमानानामप्यनेनैव सूचितत्वात् । अपिचाज्ञानमात्रानुपादानकस्वरूपत्वात्, ब्रह्मवदित्यन्वयव्यतिरेकिणो व्यावहारिकपदार्थमात्रे प्रयोक्तुं शक्यत्वाच्च । विमतं न सदसद्विलक्षणम् प्रतीयमानत्वात् व्यवह्रियमाणत्वात् ब्रह्मवदित्यादिकेवलान्वयिनोऽपि सत्त्वाच्च । नच परमार्थसत्त्वमबाध्यत्वं वा व्यावहारिकं ममाप्यस्तीति सिद्धसाधनमिति वाच्यम् । ब्रह्मणि श्रुत्यादिसिद्धस्य ब्रह्मरूपस्य परमार्थसत्त्वस्य त्वन्मते तादृशत्वेऽपि तस्य स्वरूपत एव परमार्थसत्त्वसिद्धिवदस्माकमपि तावतैवाभीष्टसिद्धेः । प्रमाणस्यास्यारोपितार्थमादाय सिद्धसाधनतायामारोपितवह्न्यादेः सर्वत्र सौलभ्येनानुमानमात्रोच्छेदापाताच्च । व्यावहारिकस्य चारोपितरूपत्वेऽस्मदिष्टसिद्धेरन्यूनत्वात् । भवदनुमानाद्वैतश्रुत्यादिषु चारोपिताद्वैतादिकमादाय मयाऽपि सिद्धसाधनताया वक्तुं शक्यत्वेन सर्वव्यवहारविलोपप्रसङ्गाच्च । अपिच विमता वा मुक्तित्वेन परममुक्तित्वेन वाऽभिमताऽविद्यानिवृत्तिर्मूला-

विद्यानिवृत्तिर्वा सविलासाविद्यानिवृत्तिर्वा प्रपञ्चसमानकालीना, जीवेश्वरभेदसमानकालीना ईश्वरसार्वज्ञादिभावरूपधर्मसमानकालीना, निवृत्तित्वात् घटनिवृत्तिवत् इत्यादीन्यप्यनुमानान्युन्नेयानि । नच बहुजीववादे सिद्धसाधनमिति वाच्यम् । तस्यापि परममुक्त्यनन्तरं जगन्मात्राभावस्याभिमतत्वात् । अन्यथा जगत्प्रवाहस्यानाद्यन्तत्वेन जगत्सत्यताऽपरिहारात् । अपिच उक्ताविद्यानिवृत्तिः भेदसमानाधिकरणा निवृत्तित्वात् घटनिवृत्तिवत् । शुद्धब्रह्मभेदसमानाधिकरणा वा अविद्याध्वंसत्वात् इदानींतनाविद्याध्वंसवत् । विमत आत्यंतिकदुःखध्वंसः शुद्धब्रह्मभेदसमानाधिकरणः दुःखध्वंसत्वादिदानींतनदुःखध्वंसवदित्यपि प्रयोगसंभवात् न काऽप्यनुपपत्तिः । कथं तर्हि "नेह नानाऽस्ति किंचन" "एकमेवाद्वितीयं" "सर्वं खल्विदं ब्रह्म" "स आत्मातत्त्वमसी"त्यादि श्रुत्यर्थ इति चेत् । अत्र ब्रूमः । प्रकृत्यादिघटपटाद्यनन्तानन्तजडपदार्थमात्रधर्मिणो रूपरसगन्धस्पर्शक्रियाद्या जातत्वजडत्वानित्यत्वाद्याश्च धर्माः प्राकृताः चैतन्यप्रतियोगिकाः अन्योन्यप्रतियोगिका भेदाः संत्यनन्ताः । ते च स्वधर्मिषु तेषु तेषु जडेष्वेव तिष्ठन्ति न ब्रह्मणीति सर्वमतसंमतम् । अखण्डैकरसनिर्विशेषचैतन्यवादिनस्तव मते सर्वथा जडजगद्धर्मिक एव भेदादिधर्मप्रपञ्चः । यद्यपि अवच्छेदकभेदादवच्छिन्नचैतन्यस्याप्यस्ति भेदः । तथाऽपि प्रयोजकीभूतावच्छेदकभेदो जडजगत एव । रूपरसादिस्तु न कथंचिदपि । चैतन्यगतस्य च श्रुत्या इह नेति ब्रह्मणि निषेधे घटो रूपी क्षीरं मधुरं गन्धवत्कुसुमं, उष्णो वह्निः चलति प्रदीपः जडो घट इत्याद्याकारेण घटः पटो न स्तंभःस्तंभो न नेत्याद्याकारेण च प्रतिपन्नस्य स्वस्योपाधौ घटस्तंभादावेकदाऽपि निषेधाभावेन त्रैकालिकनिषेधस्य सुतरामभावाच्च तन्मिथ्यात्वमिति । नहि तेजसि प्रतिपन्नस्य रूपस्य वायौ निषेधे मिथ्यात्वम् । नवा आपणे प्रतिपन्नस्य रजतस्य चत्वरे निषेधो बाधः । अपितु शुक्तौ प्रतिपन्नरजतस्य शुक्तावेव निषेधवत् स्वोपाधौ घटादावेव निषेधे । स च ब्रह्मणि घटादितादात्म्यसिद्ध्युत्तरकालीनो घटपटतादात्म्यसिद्ध्युत्तरकालीनो वेति न कदाऽपि स्यात् । तवापि मते अयं घट इत्यत्राधिष्ठानतया पूर्वांशे कथंचिच्चैतन्यभानेऽपि घटो जातः पटो ध्वस्तः पटो रूपी पटो न घटो भिन्न इत्यादिषु न चैतन्यभानमङ्गीकारार्हम् । तथा सति अयं घट इत्यत्रोभयत्रापि चैतन्यभानप्रसङ्गेन

पौनरुक्त्यापातात् । चैतन्यस्यापि जडत्वरूपित्वाद्यापाताच्च । अस्माकं तु नोभयत्रापि चैतन्यभानम् । अयं घट इति हि घटप्रतीत्याकारः । तत्रायमित्येतद्देशकालवर्तित्व-मुल्लिख्यते । देशश्च भूतलकपालादिर्न ब्रह्म । घट इति घटत्ववत्त्वम् । तथाचौपनिषद-नीरूपब्रह्मणश्चाक्षुषज्ञाने न कथंचिदुल्लेखः । कालस्य तु साक्ष्युपनीतस्य भानमिति न कश्चिद्दोषः । त्वयाऽप्यस्मच्चरणानुसरणमेवावश्यं कार्यम् । सोऽयं देवदत्त इत्यत्र विरुद्धांशत्यागेन स्वरूपमात्रैक्यं निदर्शयता तद्देशकालवर्तित्वैतद्देशकालवर्तित्वयोरेव तदिदंपदार्थत्वाङ्गीकारात् । आऽऽविपालगोपालं प्रसिद्धानुभवस्य स्वप्रक्रियानुसारेण व्याख्यानायोगाच्च । एतेन धर्मिण एव जडप्रपञ्चस्य बाधे तद्धर्मभूतरूपादिप्रपञ्च-स्यापि बाधः कृतप्राय इति निरस्तम् । धर्मिणः प्रपञ्चस्याप्यनया श्रुत्या स्वोपाधित्वेन प्रतिपन्नब्रह्मणि निषेधेऽप्ययं घट इत्यादिसार्वजनीनप्रतिपत्तावुपाधितयाऽयमित्यत्र प्रती-यमानदेशकालयोरनिषेधेन प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपबाधाला-भात् । देशकालयोरप्ययं-देशः अयं काल इति प्रतीयमानयोः नित्यविभ्वो-र्व्यक्तिभेदेन स्वनिर्वाहकतया वा देशकालावेवोपाधिरिति न ब्रह्मणि निषेधो बाधः । एवंच जडमात्रनिष्ठप्राकृतरूपरसगन्धादिधर्मप्रपञ्चस्य जडजगद्धर्मिकभेदसमुदायस्य वाऽनया श्रुत्या तदनधिकरणे ब्रह्मणि निषेधः तत्सत्यत्वोपयोग्येव न प्रतिकूल इत्यर्धमवसितं भारस्य । ननु श्रुत्यादौ ब्रह्मापि जगदुपाधिः प्रतीयते । अतस्तत्र निषेधः कथं न बाध इति चेन्न । भ्रांतिप्रतिपन्नोपाधौ निषेधो वा बाधः । उत-प्रमाणप्रतिपन्नोपाधौ । न तावद्द्वितीयः । तादृशोपाधौ निषेधस्यैवायोगात् । नहि रजतमापणे निषिध्यते । किंतु भ्रांतिप्रतिपन्नोपाधौ शुक्तावेव नेदं रजतमिति । न प्रथमः । मूढजनानामयं घट इत्यादिप्रतीतिर्हि भ्रांतिः । तत्र चोपाधिः कालादिरेव प्रतीयते । तस्मिंश्च निषेधाभावान्न रूपमिथ्यात्वसिद्धिः । ननु श्रुतिप्रतीतिरपि भ्रांतिरतो ब्रह्मापि भ्रांतिप्रतिपन्नोपाधिरिति चेन्न । किं तन्मात्रवर्तित्वेन प्रतीयते जगत् । येन मिथ्यात्वमाशास्येतापि । उतोभयवर्तित्वेन । न प्रथमः । यतः प्रत्यक्षादिना देशकालवर्तित्वेनापि प्रतीयते । मानत्वात् । श्रुतावपि "यत्किंचित् जगत्यां जगदि"ति सर्वस्यापि जगतः प्रकृतिवर्तितायाः श्रवणात् । न द्वितीयः । तदंशे श्रुत्या निषेधेऽपि इतरांशेऽनिषेधेन सत्यत्वसंभवात् । न ह्युभयनिष्ठतया

प्रतीतदण्डस्यैकनिष्ठत्वबाधे परपुरुषकरधृतो दण्ड एवादण्डो भवति। न वा गुंजापुंज-वह्नयोः वह्निभ्रमे एकांशबाधेऽपरांशस्थो वह्निरवह्निर्भवति। न ह्ययं द्वित्वादिवद्व्या-सज्यवृत्तिधर्मः। येनैकत्र निषेधेऽपि निषेधः स्यात्। नच वाच्यमपरांशप्रतीतिरपि भ्रांतिरिति। किं बाधकवशाद्भ्रांतिरुत तूष्णीं। नाऽऽद्यः। उक्तविधया बाधका-भावात्। न द्वितीयः। भवदभिमतचरमप्रमाया अपि भ्रांतित्वप्रसङ्गात्। ननु भवतामपि मते सर्वाधारे ब्रह्मणि कथं जडनिष्ठधर्मप्रपञ्चनिषेधोऽनुकूल इति चेन्न। किमस्माकं श्रुत्यर्थानुपपत्तिं शङ्कसे। उत वस्तुस्थितिं विचारयसि। नाऽऽद्यः। श्रुत्यर्थस्यास्माभिरन्यथैव वक्ष्यमाणत्वात्। इदं तु त्वत्प्रक्रिययापि तत्र नेयं श्रुति-र्मिथ्यात्वसमर्थनसमर्थेति तवैवानुपपत्तिप्रदर्शनम्। न द्वितीयः। नहि सर्वाधारत्वं वदन्तोऽपि वयं जडनिष्ठजडत्वानित्यत्वचेतनभिन्नत्वप्राकृतरूपरसादिकमपि परमेश्वर-गतमिति वदामोऽपितु तत्र तत्रापि कर्तृत्वनियामकत्वादिना भगवतः स्वातंत्र्यमेव। तदुक्तं भगवत्पादैरेव "स्वातन्त्र्यं तद्गतत्वं च शब्दवृत्तेर्हि कारणमि"ति। अन्यथा "अस्थूलमनण्वह्रस्वं" "निरनिष्टो निरवद्य"इत्यादिबहुश्रुतिस्मृतिविरोधात्। व्यव-हारसाङ्कर्यापाताच्च। युक्तं चैतत्। नहि सर्वाधारः काल इत्येतावता भूमेरसाधारण-धर्मो गन्धोऽपि कालगतः तस्यापि पृथिवीत्वापातात्। नवा शुक्लभास्वरं रूपं तन्निष्ठं चाक्षुषत्वापातात्। किंचायं घट इत्यत्राधिष्ठानतया चैतन्यभानाङ्गीकारेऽपि नेयं श्रुतिर्धर्मिप्रपञ्चबाधिका। तथाहि। अधिष्ठानभूतशुक्तिरेव स्वावरकाविद्यापरिणाम-रूपरजतात्मना प्रतीयते "इदं रजत"मिति। तथाऽधिष्ठानचैतन्यमेव स्वाविद्यापरि-णतघटादिभावेन विवर्तते 'अयं घटः'इत्याद्याकारेणेति तव मतम्। नतु ब्रह्मणि घट इति वाऽस्मिन् घट इति वा आधाराधेयभावेन ब्रह्मणि जगदारोपः। तथाऽननु-भवात्। प्रत्युत पुरे पौरा, जनपदे जनाः, वने वन्याः, जले यादांसीत्यादौ भूतले घटः कपाले घटः तंतुषु पटः तटाके जलमित्यादौ चान्याधारतयैव जडाजडप्रपञ्चस्य प्रतीतेः। अन्यथा (शां. भा. पु. ७६ प. १) * अन्योन्यस्मिन्नन्योन्यात्मकता-मध्यस्य * इति स्ववचनविरोधात्। (शां. भा. पु. ७६ प. १) * अन्योन्यधर्मां-श्चाध्यस्य * इत्याधाराधेयभावापन्नधर्माध्यासस्य पृथगेवाभिधानाच्च। तत्र च बाधक-ज्ञानेनापि नेदं रजतमितिवन्नायं घट इति वा नेदं जगदिति वा भवितव्यम्। ननु

नेह जगदिति । तस्य जगत्तादात्म्यभ्रमानुकूलत्वात् । नहीदमेव रजतमिति प्रतीतौ तत्र पुना रजताभावबुद्धिर्बाधिका । रजते रजताभावस्येष्टत्वात् । नहि घटे घटस्तिष्ठ त्यात्माश्रयात् । किंच शुक्त्यावानीतरजतस्य कदाचिदवस्थानसंभवेन ब्रह्मणि जगतः सत्यस्थले रजतस्येव वर्तमानतया च शुक्तौ रजतं न ब्रह्मणि जगन्नेति त्रैकालिक-निषेधायोगात् । कथं तर्हि भवतामपि रजतस्य त्रिकालनिषेध इति चेन्न । इदं रजतं नाभून्न भवति न भविष्यतीति तदात्मरजतस्यैव त्रिकालनिषेधाङ्गीकारात् । स च क्वचिद्विशेषणसत्त्वे तादात्म्यमात्रनिषेधात् । उभयासत्त्वे उभयनिषेधात् । इह ब्रह्मणि किंचन नेति निषेधस्तु नात्र रजतत्वमितिवद्ब्रह्मणि भ्रांतिप्रतिपन्नतद्धर्मसंसर्ग-निषेधपर इत्येव वक्तुमुचितम् । स चोक्तरीत्याऽनुकूल एवेति सत्यरजते रजतत्वादेरिव न प्रपञ्चे तद्धर्मसत्तायाः बाधकः । धर्मिभूतप्रपञ्चनिषेधस्तु एतच्छ्रुत्याकारपर्यालोच-नायां न लभ्यत एवेति न धर्मिबाधोऽतो न तत्प्रयुक्तधर्मबाधोऽपि । ननु शुक्तौ रजतत्वनिषेधे नेदं रजतमित्यार्थिकरजतबाधलाभवद्ब्रह्मणि जगद्धर्मनिषेधे ब्रह्म न जगदित्यपि जगद्बाधो लभ्यत एवेति चेत् । लभ्यताम् । तथापि घटः पटो नेत्यत्र घटपटतादात्म्यमात्रबाधेऽपि घटपटाबाधवन्नायं जगदित्युक्ते जडाजडजगद्ब्रह्मणोरभेद-मात्रबाधेऽपि ब्रह्मजगतोरबाधसंभवात् । नेदं रजतमित्यत्र रजततत्तादात्म्ययोरुभयो-रपि सर्वथाऽभावान्निषेधविषयत्वमिह तु जगतोऽर्थक्रियाकारित्वसत्त्वान्न निषेधः । नच वाच्यं व्यावहारिकसत्त्वं न निषेधविरोधीति । तथासति घटवति भूतले घटो नास्तीति प्रसङ्गात् । (न)स्वर्गकामो यजेतेति विधि(निषेध)प्रसङ्गाच्च । एतेन जडजगन्मात्र-निषेधोऽपि न श्रुत्यर्थ इत्युक्तं भवति । किंच बाध्यानामपि शुक्तिरूप्यरज्जुसर्पादीनां विभिन्नमतिदोषादीनां विचित्रविपरीतप्रमाबाध्यानां च भेदप्रतियोगित्वं ततो भेदो ज्ञेयत्वं चेत्याद्यास्तद्धर्मा धर्मिसत्तानिरपेक्षा अबाध्या एव दृष्टाः । नेदं रजतमिति बाधकप्रत्ययदशायामपि सत्त्वेनोल्लिख्यमानत्वात् । स्वप्रक्रियामात्रस्याप्रयोजक-त्वात् । तत्रापि मतेऽन्योन्याभावस्य नित्यत्वेन घटध्वंसानन्तरमपि विद्यमानस्य धर्मिसत्तानिरपेक्षत्वाच्च । तथाच कथंचिदपि न साध्यो भेदादिधर्मप्रपञ्चबाधः । किंच श्रुतिस्वारस्येनाप्राप्तस्य धर्मप्रपञ्चबाधस्य धर्म्यभावयुक्तिसिद्धत्वाङ्गीकारे "यश्चार्थादर्थो न स चोदनार्थः" इतिवचनादश्रौतत्वेन श्रुतेः सर्वमिथ्यात्वाप्रति-

पादकत्वापाताच्च । श्रवणानुसारेणैवापरोक्षप्रमायाः भाव्यत्वेन ब्रह्मणि किंचन नास्तीत्याकारैव सा भवितुमर्हति । सा चोक्तरीत्या न जगद्धर्मबाधिका । अन्यानुमितिस्तु परोक्षरूपा नैव बाधिकेत्यबाधितधर्मसिद्धिः । नचेश्वरेणेदमेव जगद्ब्रह्मण्येव दृष्टम् । तस्य श्रुत्या बाधे कथं न मिथ्यात्वमिति शंक्यं । तेनापि मयि सर्वमिति वदता इदमिति वदता च स्वस्मिन्देशकालयोश्च जगद्दर्शनात् । शुद्धमात्रविषयकचरमप्रमया तस्यैव जगन्निषेधिकया ईश्वरदृश्यमानजगदुपाधिषु स्वविग्रहदेशकालेष्वपि निषेधेन निरुक्तमिथ्यात्वालाभात् । किंचेश्वरोऽपि चराचरादिप्रपञ्चधारणार्थं भूतधात्रीं कुर्वन् तन्नाम्ना तां निर्दिशन् भूधारणार्थं च भूधरान् सृजन् तन्नाम्ना तांश्च निर्दिशन् दैत्यवधार्थं भूमाववतरन् नवनीतादिलाभार्थं पात्राणि भिंदन् असुरशिरःपातार्थं शिरोधरं छिंदन् तत्र तत्र जगत् कथं न पश्येत् । त्वयाऽपीदमवश्यमङ्गीकार्यम् । अन्यथा स्वप्रक्रियैव साक्षाच्छ्रुतिबाधितार्थमात्रद्रष्टृत्वेनेश्वरस्यास्मदादितोऽपि महाभ्रांतत्वापातात् । देशकालादिस्वस्वोपाधौ तत्तत्पदार्थगोचराबाधितास्मज्ज्ञानप्रसादेन जगतः सत्यत्वलाभाच्च । नहि गुंजापुंजे वह्नित्वं भ्रांतदृष्टं बाधितमित्येतावता वह्नौ वह्नित्वमपि बाधितं दृष्टम् । नन्वस्मदादेरेवेश्वरभ्रांतिपरिकल्पितत्वात्तद्भ्रांतिविच्छेदेन विच्छेदे कथं न जगद्विच्छेद इति चेन्न । एवमप्यदृष्टबोधेन तत्सिद्धजगतोऽवस्थानसंभवात् । नहि कृपीवलनाशे तद्दृष्टिसिद्धं जगद्वा धान्यादिकं वा विनश्यति । नहि शास्त्रद्रष्टुर्नाशे शास्त्रस्यापि नाशः । उक्तरीत्येदानीमनिवृत्तेश्वरभ्रांतेः कदाऽपि निवृत्त्यसंभवेनास्मदादेरेव विच्छेदासंभवाच्च । एतेन ब्रह्मैव स्वभ्रांत्या स्वस्मिन्नेव जगत्पश्यति । तस्य च श्रुत्या बाधे सर्वबाध इत्यपि निरस्तम् । ब्रह्म घटे रूपं भूतले घटं तंतुषु पटं क्षीरे रसं कुण्डे बदरं दण्डिनि दण्डं चोल्लिखति न वा । न तावद्द्वितीयः । तत्तद्विशिष्टापरोक्षज्ञानं ब्रह्मचैतन्यमेवेति स्वप्रक्रियाभङ्गप्रसङ्गात् । आद्ये कथं तत्तद्विशिष्टज्ञानस्य श्रुत्या बाधः । ब्रह्मणि निषेधेऽपि ब्रह्मदृष्टतत्तदुपाधिषु घटादिष्वनिषेधात् । तथा तथाव्यवहारासंभवाच्च । अपिच जीवचैतन्यनिष्ठवन्धेश्वराधीनत्वतद्भेदसुखदुःखभोक्तृत्वादीनां च कथं बाधः । अनुपाधौ ब्रह्मचैतन्ये श्रुत्या निषेधेऽपि तदुपाधौ जीवचैतन्ये निषेधादर्शनात् । जीवचैतन्यस्यापि पारमार्थिकत्वेन धर्मिबाधप्रक्रियानवकाशाच्च । नच विशिष्टमेवैत-

दुपाधिस्तच्च बाधितमिति वाच्यम् । जीवरूपस्य तस्याहमिति हृदयकमलादि- देशोपाधौ प्रतीयमानस्य तत्र निषेधाभावे बाधायोगात् । नच विशेषणबन्धादिबाधे तद्विशिष्टरूपजीवस्यैव बाध इति वाच्यम् । तस्यैव ब्रह्मणि निषेधेऽपि जीवचैतन्येऽ निषेधेन बाधाप्राप्तेरुच्यमानत्वात् । त्वन्मते विशिष्टरूपे जीवे विशेष्यांशस्य ब्रह्म- चैतन्यात्मकत्वेन तस्य च ब्रह्मणि निषेधेऽपि मिथ्यात्वालाभात् । नहि घटः स्वयमेव स्वस्मिन्नास्तीति मिथ्या स्यात् । न वा दण्डिनि दण्डी नास्तीत्येतावता दंडयेव बाधितः । विशेषणविशेष्ययोरुभयोरप्युपाधित्वेनैकांशबाधेऽप्यपरांशोपाधेरबाधेन गुंजा- पुंजवह्न्योः प्रतीतवह्नित्ववदबाधितत्वसंभवात् । न हि द्वित्ववदिदं व्यासज्यवृत्ति । बन्धमोक्षयोः सामानाधिकरण्याय बन्धस्य चिन्मात्राश्रितत्वाङ्गीकाराच्च । विशेषण- स्यैवाज्ञानान्तःकरणसुखदुःखादिरूपतया तस्य चात्माश्रयभिया तत्तद्विशिष्टात्मक- जीवोपाधित्वासंभवेन जीवचैतन्यमात्राश्रितत्वावश्यंभावाच्च । अभेदाद्ब्रह्मचैतन्ये निषेध एव चैतन्येऽपि निषेध इति चेन्न । श्रुत्या विरुद्धधर्मबाधेऽविरुद्धयोश्चैतन्ययोरभेद- सिद्धिः । तत्सिद्धौ चाभेदेन ब्रह्मणि निषेधोऽपि स्वोपाधावेव निषेध इति विरुद्ध- धर्ममिथ्यात्वसिद्धिरित्यन्योन्याश्रयात् । अभेदवाक्यस्याभेदपरतायां तदर्थं विरुद्ध- धर्ममिथ्यात्वसिद्धिः । तत्सिद्धौ च योग्यार्थकतयाऽभेदवाक्यस्याभेदपरतासिद्धिरित्य- न्योन्याश्रयाच्च । तथाच यतिशिरोमुण्डनन्यायेन परेणाशास्यमानजगन्मिथ्यात्वे शिखामात्रमपि नोर्वरितमिति द्रष्टव्यम् । अपिचोदाहृतानुमाश्रुतयः तद्गतपदवर्णादिकं च किमेकैकमुत नाना । न प्रथमः । अनङ्गीकारात् । अनुभवविरोधात् । पृथ- गुदाहरणवैयर्थ्याच्च । न द्वितीयः । स्वप्रक्रियैव श्रुत्यर्थबाधात् । परमार्थतो नास्तीत्यनेनाप्यपरमार्थतोऽस्तीत्येव लभ्यते । तच्च व्याहतम् । अपरमार्थत्वस्य बाध- रूपतया तस्य च नास्तित्वापरपर्यायकालत्रयनिषेधरूपत्वेन नास्तितयाऽस्तीत्युक्तं स्यात् । तच्च कथं न व्याहतम् । अपिच यथाश्रुतार्थस्यासत्त्वाबाधापत्त्याऽपि पदा- न्तरमध्याहार्यम् । तर्हि याचमानेनापि कालकूटमेव कुतो याचनीयम्? एवमपि विश्व विप्लवानिवारणात् । किंत्वपरमार्थत इत्येव । अनेन च परमार्थतोऽस्तीत्येव लभ्यते । ततश्च वेदशास्त्रगुरुशिष्यस्वर्गापवर्गप्रमाणप्रमेयात्मकसकलप्रपञ्चस्यापि महासत्त्वमेवो- पपादितमिति सर्वजनश्लाघ्यता च श्रुतेः स्यात् । किमनेन विषपुच्छसदृशपदाध्या-

हारेण । अपरमार्थतोऽस्तित्वं च त्वत्समयप्राप्तमिति तन्निषेधाय परमार्थत इति विशेषणमपि सार्थकम् । अनादेः श्रुतेः सादिसमयप्राप्तनिषेधकत्वं च "तद्धैक आहुरसदेवेदमग्र आसीत्" "कथमसतः सज्जायेत" इत्यादौ दृष्टमिति न कश्चित्क्षुद्रोपद्रवः । अपिच यदीयं श्रुतिरपि न परमार्थतो ब्रह्मण्यस्ति । तर्हि कथं तस्याः परमार्थभूतजगदभावसाधकता । व्यावहारिकसत्त्वाच्चेत्तर्हि प्रत्यक्षादिप्रमाणादपि कुतो न पारमार्थिकघटादिप्रपञ्चसिद्धिः । पदार्थबाधान्नेति चेन्न । उक्तरीत्या श्रुतेर्भिन्नविषयत्वेन प्रत्यक्षदृष्टघटादिबाधकाभावात् । श्रुत्या प्रत्यक्षार्थस्येव प्रत्यक्षेण श्रुत्यर्थस्यापि बाधसाम्यात् । न भविष्यतीत्यस्य कथंचिदबाधेऽपि नास्तीत्यस्य साक्षात्प्रत्यक्षबाधितत्वात् । नहि साक्षात्प्रत्यक्षबाधितं माणवकाग्नित्वादिकं श्रुत्या साध्यते । एतेनैवापौरुषेयत्वेन प्रबला श्रुतिः प्रत्यक्षबाधायालमित्यपि निरस्तम् । किंचापौरुषेयत्वेनापि हि निर्दोषतया प्रामाण्यमेव समर्थ्यते । घटादिप्रत्यक्षे तु साक्षिणैवातिदूरत्वादिदोषाभावस्य निर्णयात्सुतरां प्रामाण्यसमर्थनम् । अविद्यारूपदोषस्त्वद्याप्यसिद्ध एव । शङ्कापिशाच्यास्तु सर्वत्र सौलभ्येन प्रामाण्यस्वतस्त्ववादिनस्ततो भीत्ययोगाच्च । इयांस्तु विशेषः । श्रुतेर्न सर्वथा बाधः । किंत्वर्थान्तरप्रक्षेप एवेति । चन्द्रप्रादेशत्वप्रत्यक्षं तु अतिदूरत्वदोषग्राहिणा साक्षिणैव प्रामाण्यग्रहणान्निवृत्तेर्दत्तावकाशमिति श्रुत्या बाध्यते । घटादिप्रत्यक्षे तु साक्षिणैव साक्षात्स्वग्राह्यसुखादिपर्यन्तपरीक्षया प्रामाण्यस्यैव निर्णयान्न तच्छ्रुतेरवकाशः । ननु विधायकप्रत्यक्षादपि निषेधिका श्रुतिरेव प्रबलेति चेत् । अन्धकारस्थघटनिषेधकप्रत्यक्षान्नदीतीरपञ्चफलसंसर्गनिषेधकवाक्यादपि विधायकप्रत्यक्षस्यैव प्राबल्यदर्शनात् । अन्यथा ऐक्यश्रुतेरेव बाधापाताच्च । तथाच प्रत्यक्षादेरबाधितजगत्साधकत्वाभावे तदविरोधात् श्रुतेः परमार्थबाधसाधकत्वं तत्सिद्धौ च बाधात्प्रत्यक्षादेरबाधितजगत्साधकत्वाभाव इत्यन्योन्याश्रयात् । किंच बाधान्न पारमार्थिकघटादिसिद्धिरिति वदताऽबाधादेव पारमार्थिकबाधसिद्धिरित्यप्युक्तं स्यात् । तथाच प्रत्यक्षसमानयोगक्षेमश्रुत्युदाहरणं व्यर्थमापद्येत । नहि स्वार्थाबाधोऽपि श्रुत्यर्थः । श्रुत्यर्थत्वं तु प्रत्यक्षाद्यर्थत्वमिव न तदबाधोपयोगि । एवंच श्रुत्यर्थभूतबाधपारमार्थिकतासाधकोऽबाधोऽप्रामाणिक एवेत्यबाधात् प्रत्यक्षादिसिद्धघटादेरबाधितत्वसिद्धिः । ननु जगद्बाधि-

काऽपि श्रुतिः स्वव्याहत्या स्वस्यैवाप्रामाण्यभिया न स्वार्थं बाधं बाधते। अतो भावद्वैतमेव बाधितमित्यर्थादबाधितो बाध इति चेत्। तर्हि स्वसमानयोगक्षेमजगत्सत्त्वप्रतिपादकश्रुत्यन्तरप्रत्यक्षादेरपि व्याहत्याऽप्रामाण्यभिया न तद्विषयजगदपि बाध्यताम्। अतो भावद्वैतमपि सिध्येत्। यत्र च नेदृशी व्याहतिः तादृशमेव किंचिच्छ्रुत्या बाध्यताम्। यदि च किंचनशब्दस्वारस्याय श्रुत्यर्थो बाधोऽपि बाधित इत्यङ्गीक्रियते तर्हि घटाभावाभावे घटस्येव जगदभावाभावे सत्त्वावश्यंभावादियमेव श्रुतिर्जगत्सत्यत्वे मानम्। किंच नास्तीत्यत्र लटा वर्तमानमात्रनिषेधात् त्रैकालिकनिषेधासिद्धिश्च। अपि च किमिदं व्यावहारिकसत्त्वं नाम। किं व्यवहारोपयोगि सत्त्वमप्यस्तीति। उत सत्त्वेन व्यवहारमात्रमिति। नाद्यः। अस्मदिष्टसिद्धेरन्यूनत्वात्। न च वाच्यं विद्यमानमपि तत्सत्त्वं ब्रह्मज्ञाने सति बाध्यत इति। बाधस्य सत्त्वविनाशरूपत्वे घटवदनित्यत्वमात्रापत्त्याऽस्मन्मतहान्यभावात्। त्रैकालिकनिषेधरूपत्वे तु प्रागपि सत्त्वाभावप्राप्त्या द्वितीयपक्षनिक्षेपात्। न द्वितीयः। अर्थासाधकत्वस्य तदवस्थत्वात्। नहि भ्रांतिदशायां सत्त्वेन व्यवह्रियमाणं रजतं कटकोपयोगि। ब्रह्मज्ञानात्पूर्वमबाध्यत्वात्ततो विशेष इति चेन्न। इह मुद्गरविनाश्यघटाद्राजतविनाश्यघटस्य विशेषादर्शनात्। तवापि मते ब्रह्मज्ञानपर्यन्तमनुवर्तमानभ्रमविषयनभोनीलिम्नः सिद्धधूमवन्नैल्याहेतुत्वदर्शनात्। तादृशदेहात्मैक्येन देहे चेतनत्वादर्शनाच्च। किंच "इमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" "एको दाधार भुवनानि विश्वा" "विश्वं सत्यं" "याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यः समाभ्यः" इत्यादि श्रुत्या ब्रह्मणि प्रतीतजगत्स्वरूपस्य "परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्यदस्ति" इत्यादिश्रुत्या ब्रह्मणि प्रतीतचेतनाचेतनजगन्नानात्वस्य श्रुत्यैव निषेधायोगात्। कदाऽप्यैकीभावरहिताचेतनभेदप्रायपाठे चेतनभेदस्यापि ब्रह्मणि तादृशस्यैव लाभात्। श्रुत्योर्हि परस्परविरोधेऽविरुद्धार्थकथनस्यावश्यकत्वात्। अन्यथा मीमांसाया एव वैयर्थ्यापातात्। न च वाच्यं जगत्सत्यत्वश्रुतिः प्रत्यक्षसिद्धजगत्सत्यत्वानुवादिनीति। नास्तित्वश्रुतेरपि बौद्धसमयसिद्धक्षणिकत्वासत्त्वानुवादित्वप्रसङ्गात्। "अग्नीषोमीयं पशुमालभेते"ति विध्याश्रयणेन तद्विरुद्धनिषेधस्यैव सङ्कोचदर्शनाच्च। "द्युभ्वाद्यायतनं स्वशब्दात्" "अक्षरमंबरान्तधृतेः"

इत्यादि ब्रह्ममीमांसासचिवत्वेनास्मच्छ्रुतेरेव प्रबलत्वाच्च । प्रबलविधिना भ्रांतनिषेधस्यैव बाधदर्शनाच्च । "त्यजेदेकं कुलस्यार्थे" इति न्यायेन बहुतरश्रुतिरक्षणाय त्वदभिमतकतिपयवाक्यबाधस्यैवोचितत्वात् । अपिच रजत एव रजतत्वं समवायेनास्ति संयोगेन नास्तीति लोकेऽपि व्यवहारदर्शनात् । जगदपि ब्रह्मणि समवायेन नास्ति संयोगेनास्तीति द्विविधवाक्यानामपि समाधानसंभवे वृथैकपक्षीयापौरुषेयवाक्यघातायोगाच्च । किंच तर्हीह पक्षी नेह पक्षीति प्रदेशभेदेनैकस्मिन्नेवाऽऽकाशे पक्षिणोऽस्तित्वनास्तित्वव्यवहारदर्शनादपरिच्छिन्नमूर्तेरात्मनो रोमकूपमात्रेऽस्ति जगदन्यत्र नास्ति इति वाक्यद्वयसमाधानसंभवाच्च । अपिच "भवन्ति काले न भवन्ति हीदृशा" इति कालभेदेनैकस्यैव सत्ताऽसत्ताव्यवहारदर्शनादिदानीं ब्रह्मण्यस्ति जगत्प्रलये नास्तीति वाक्यद्वयस्यापि सावकाशत्वाच्च । अस्माकं तु "एवं धर्मान्पृथक्पश्यंस्तानेवानुविधावति । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इति च तत्रैव प्रकरणे धर्मनानात्वदर्शनस्यानर्थहेतुत्वमुक्तम् । तत्कुतो हेतोरित्याशङ्कायां इह ब्रह्मणि किंचनावतारगुणधर्मादिकं नानाभूतं नास्ति यतोऽतस्तज्ज्ञानस्य मिथ्याज्ञानत्वादुक्तं युक्तमिति पूर्वोत्तरसंबद्धार्थसंभवान्न काचिदनुपपत्तिः । दृश्यते हि "सर्वेभ्यः कामेभ्यो दर्शपूर्णमासावि"त्यत्र सर्वशब्दस्य प्रकृतपशुमात्रपरत्वम् । युक्तं चैतत् । इह न द्वैधीभाव इह न विदारणं गृहे न कलह इत्युक्ते तदवयवादिष्वेव द्वैधादिनिषेधलाभात् । न चैवं सति धर्मनिषेधपरमेवेदं वाक्यं स्यादिति वाच्यम् । तथासति धर्मान्पश्यन् य इह पश्यति इह किंचन नास्तीत्येतावता पूर्तेः शेषवैयर्थ्यात् । पृथङ् नानेति च पदमहिम्ना "न जीर्णमलवद्वासाः स्नातकः स्यादि"त्यादाविव "सविशेषणे विधिनिषेधौ विशेषणमुपसंक्रामत" इतिन्यायेन नानात्वमात्रनिषेधस्य लाभात् । अन्यथा "यो वा अनन्तस्य गुणाननन्ताननुक्रमिष्येत्स तु बालबुद्धिः" "विष्णोर्नु कं वीर्याणि प्रवोचं" "विष्णोर्नु वीर्यगणनां कतमोऽर्हतीह यः पार्थिवान्यपि कविर्विममे रजांसी"त्यादिब्रह्मधर्मप्रतिपादकश्रुतिस्मृतिविरोधात् । एतेनैव जगत्स्वरूपनिषेधपरत्वं वदतः परस्य इहनानेतिपदद्वयवैयर्थ्यमप्युक्तमिति द्रष्टव्यम् । तथासति किंचन नास्तीत्येतावतैव पूर्तेः । अथवेह नाना नानात्वं भेदः किंचन ईषन्मात्रमपि नास्तीति भावप्रधानतया व्याख्याने साक्षाद्ब्रह्मधर्मभेदमात्रस्यैव

निषेधलाभात् । अथवा "विनञ्भ्यां नानाञौ नसह"इतिसूत्रात् इह किंचन नाना विना नास्ति इति धूमाग्न्योरिव ब्रह्मजगतोरविनाभावस्यैव लाभाच्च । नन्वेवं नानात्वाभावे कथं ब्रह्मधर्मधर्मिभावो धर्मानन्त्यं चेति चेन्न । "धर्मानि"ति धर्मधर्मिभावं तद्बहुत्वं चाङ्गीकृत्य पार्थक्यमात्रनिषेधेनार्थादपृथग्भूतानामपि तेषां धर्मधर्मिभावादिसंपादकस्वभावविशेषस्यापि तत एव लाभात् । अन्यथा वाक्यस्य स्वव्याहतिप्रसङ्गात् । धर्मानन्त्यप्रतिपादकपूर्वोक्तबहुतरश्रुतिस्मृतिव्याहतिप्रसङ्गाच्च । नच स्तुतिरूपोऽर्थवादोऽयमिति वाच्यम् । अर्थवादस्यापि यथार्थवादत्वेऽस्मदिष्टसिद्धेः । अयथार्थवादत्वे श्रुत्यप्रामाण्यप्रसङ्गात् । "वायव्यं श्वेतमालभेत भूतिकाम"इति विधिवाक्योक्तवायुदेवताकयागनिष्ठभूतिसाधनत्वस्यैव "वायुर्वै क्षेपिष्ठा देवते"त्यारभ्य "स एवैनं भूतिं गमयती"त्यन्तेनार्थवादवाक्येनापि समर्थनात् । तदप्रामाण्ये विधिवाक्यस्याप्यप्रामाण्यप्रसङ्गाच्च । किंच स्तुतिरपि विद्यमानगुणसंकीर्तनमेव न त्वविद्यमानार्थकथनम् । नहि जात्यन्धं प्रति त्वं महाचक्षुष्मानित्युक्ते स्तुतिर्भवति । अपितु मर्मोद्घाटनतया तस्य क्रोधहेतुर्निन्दैव । ननु कथं तर्हि राजकीयेषु त्वमेव राजेत्यादिस्तुतिरिति चेत् । अत्रापि साक्षाद्राजपरतया स्तुतेरनभिप्रेतत्वात् । अपितु राजप्रियत्वेन राजत्वोपचारमात्रत्वात् । न चायमप्युपचार इति वाच्यम् । अनन्तवाक्यानामुपचारमात्रेण प्रवृत्त्ययोगात् । भूरजोगणनसमर्थेनाप्यनुक्रमणायोग्यत्वस्य "न शक्यन्तेऽनुसंख्यातुमनन्तत्वान्ममापि हि"इति स्वेनाप्यसंख्येयत्वस्य च सर्वथाऽसंभवाच्च । अन्यथा "आनन्दो ब्रह्मेति व्यजानादि"त्यस्याप्यौपचारिकत्वसंभवेन स्वरूपानन्दस्याप्यसिद्धिप्रसङ्गात् । "राहोः शिर"इत्यत्रापि भेदेनैव तादृशव्यवहारदर्शनात् । घटस्य स्वरूपमित्यस्य पक्षसमत्वात् । तर्हि घटस्य घट इत्यपि कुतो न व्यवहार इति चेन्न । अभिन्ने भेदव्यवहाररूपकार्यदर्शनेन कल्प्यस्य तस्य विशेषस्य व्यवहाराभावे कल्पकाभावात् । यथा ह्यभेदरहितस्थले सिंहो देवदत्त इत्यौपचारिकाभेदव्यवहारोऽभेदप्रतिनिधिना सादृश्येन समर्थ्यन्ते । न निर्निमित्तम् । एवं भेदरहितस्थले भेदव्यवहारोऽपि भेदप्रतिनिधिना केनचित्समर्थनीय इति किमपूर्वम् । व्यवहारविशेषहेतुत्वात्स एव विशेष इत्युच्यते । विस्तृतमेतत्सप्रमाणकं सयुक्तिकं च भगवत्पादैरेव । अथवा इह नाना भेदो न । कथं

तर्हि धर्मधर्मिभाव इत्यतोऽस्ति "किंचन" विशिष्य वक्तुमशक्यम् तद्भावसंपादकं चास्तीति शब्दत एव तल्लाभसंभवात् श्रौतो विशेषः । अनेनैवोत्तरश्रुतीनामपि परपक्षेऽनुपपत्तिरुक्ता वेदितव्या । श्रुत्यादिसत्त्वासत्त्वपक्षोक्तदूषणगणस्य सर्वत्र साम्यात् । किंच एकं सदेवाद्वितीयं द्वितीयाभावसहितमासीदित्यतीतार्थकक्रिया-योगात् सृष्टेः पूर्वकालीनजगत्सृष्ट्युपयोगितत्प्रागभावमात्रलाभेऽपि सर्वदाऽभाव-रूपमिथ्यात्वालाभात् । उत्तरत्राप्यभावविवक्षायां "तदेवासृजते"त्युत्तरवाक्यविरो-धाच्च । तत्रैवाग्र इत्युक्त्या कालस्य "तम आसी"दित्यादिवचनेनाज्ञानादीनां च तदाऽपि सत्त्वश्रवणेन सर्वथा द्वितीयाभावस्य बाधितत्वाच्च । पारमार्थिकद्वितीयाभाव-विवक्षायां तु उक्तो दोषः । अपिच न विद्यते द्वितीयं यस्येति बहुव्रीहेरमुख्यत्वेन एकं ब्रह्मैव न द्वितीयमद्वितीयम् प्रथममित्येवार्थसिद्धौ ब्रह्मणः सर्वप्राथम्यरूप-सर्वोत्तमत्वस्यैव लाभाच्च । किंच न विद्यते द्वितीयं यस्येति बहुव्रीहिसमासादपि न द्वितीयमद्वितीयमिति कर्मधारयसमासस्यान्तरंगतया प्राधान्यं हि सर्ववादिसंप्रति-पन्नम् । तथाच ब्राह्मणो शूद्र इतिवदेकं स्वगतभेदवर्जितं ब्रह्माद्वितीयमेवेति द्विती-याज्जगतोऽत्यन्तभेदस्यैव प्राप्त्या भेद एवेदं वाक्यं प्रमाणयितुमुचितम् । एवं सति "तदपोऽसृजतेत्य"नुपदमेव वक्ष्यमाणभेदसापेक्षसृज्यस्रष्टृभावोऽप्यनुकूलितः स्यात् । "विश्वं सत्यं" "द्वा सुपर्णे"त्यादिश्रुतयश्चानुकूलिताःस्युः । ननु द्वितीयजगदत्यन्ता-भावे तद्बललभ्याभेदे वा । वक्ष्यमाणसृष्ट्यननुकूलत्वादुक्तश्रुत्यननुकूलत्वाच्च । न ह्यत्यन्तासतः शशशृङ्गस्य सृष्टिर्दृष्टा । नवा स्वस्यैव स्वयं स्रष्टृ । अविरोधेनार्थसंभवे च वृथा श्रुतिप्रत्यक्षबाधायोगाच्च । किंच यदीदं वाक्यमद्वैते द्वितीयाभावे वा प्रमाणं स्यात् तदा "सदेव सोम्येदमग्रआसी"दिति पूर्ववाक्यैनैव गतार्थं स्यात् । अग्रे सदेवासीदित्येवकारेण द्वितीयाभावस्येदं जगत्सदसदात्मकमासीदिति त्वया व्या-ख्यातत्वेनाद्वैतस्य च तत्र लाभात् । मिथ्याभूतद्वितीयजगता इदं सदासीदित्युक्त-सत्यब्रह्ममुख्याभेदस्य त्वद्रीत्यैवासंभवेन सद्व्यतिरेकेण नासीदित्येवार्थस्य त्वयाऽपि वक्तव्यत्वे तत्रैवैवकारवैयर्थ्याच्च । अपिचैक्यपरत्वेऽस्य वाक्यस्यैकमित्यनेनैव सर्वै-क्यलाभादद्वितीयपदवैयर्थ्यं च स्यात् । यदत्रोक्तं परेण "वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः । वृक्षान्तरात्सजातीयो विजातीयः शिलादितः । इति भेदत्रयं

सद्वस्तुनि प्राप्तं निवार्यते । ऐक्यावधारणद्वैतप्रतिषेधैस्त्रिभिः क्रमात्'' इति । तदनुपपन्नम् । निघंटुव्याकरणादिनाऽवधारणमात्रार्थकस्यैवकारस्य भेदनिषेध एवाननुशासनेन सजातीयभेदनिषेधे सुतरामननुशासनात् । समभिव्याहृतपदान्तरसमायोगेन तदर्थावधारणमात्रार्थस्यैवकारस्य पृथगर्थे प्रयोगायोगात् । समभिव्याहृतपदान्तरसमायोगश्च विशेष्याभिधायकपूर्ववाक्यस्थसत्पदेन चेदन्ययोगव्यवच्छेद एव तदर्थो लभ्यते । तथाच सदेवैकमन्यदनेकमिति वा सदेवाद्वितीयमन्यत्सद्वितीयमिति वाऽस्मदनुकूलत्वन्मतप्रतिकूलार्थस्यैव लाभेन त्वदभिमतार्थालाभात् । न हि ''पार्थ एव धनुर्धर'' इत्युक्ते धनुर्धरांतराभावस्तद्भेदो वा पार्थस्य लभ्यते । अपि तु धनुर्धरताया-मसाधारण्यमेव । तच्च श्रेष्ठ्यापरपर्यायं धनुर्धरतया सजातीयवस्त्वन्तरतद्भेदाविनाभूतमेव । एतद्वाक्यस्थविशेषणाभिधायकपदद्वयेन यदि तदाऽपि शंखः पाण्डुर एवेतिवद्विशेषणीभूतैकत्वाद्वितीयत्वायोगव्यवच्छेदमात्रं लभ्यते । न त्वदभिलषितार्थ इति यत्किंचिदेतत् । यतिभङ्गश्च परोक्तश्लोके दोषः । अस्मद्ग्रन्थेऽपि क्वचिदेतादृशप्रक्रियाऽऽश्रयणं परीत्या परस्योत्तरदानार्थमिति द्रष्टव्यम् । स्वाभिमतार्थस्य तत्र तत्र बहुशः सप्रमाणकमाचार्यैरेव विस्तृतत्वात् । द्वितीयशब्दस्य चापातप्रतीतार्थपरत्वे द्वितीयमात्रलाभेनास्य गोर्द्वितीयेन भवितव्यं इत्युक्ते सदृशो गौरेवानीयते-नाश्वो न गर्दभ इत्युक्तार्थविशेषपरत्वे च सजातीयस्यैव कथंचिल्लाभेन विजातीय भेदमात्रनिषेधार्थकत्वस्योभयथाऽप्यसंभवात् । नच वाच्यमस्तु तर्हि तदेव सजातीय भेदनिषेधपरमिति । तथाऽपि प्रथमप्राप्तवाक्योक्तसादृश्यपरित्यागे कारणाभावेनासदृशं ब्रह्मेत्येव तत्राप्यर्थलाभात् । एवंच ''न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्य'' इत्युक्त सर्वोत्तमत्वमेव वक्ष्यमाणसकलजगत्स्रष्टृत्वोपयोगितया निरूपितमिति पूर्वोत्तरसंबद्धं च वाक्यं स्यात् । सर्वथा त्वदभिलषितसर्वसंहारस्त्वनर्थ एव । सजातीयविजातीयभेदवर्जनस्य व्याहतत्वाच्च । किंचेदं वाक्यं जगन्मिथ्यात्वपरं चेन्नाभेदपरम् । मिथ्याभूतसत्ययोः शुक्तिरजतशुक्त्योरिव भेदावश्यंभावात् । अभेदपरत्वे न जगन्मिथ्यात्वपरं मिथ्याभूतसत्ययोरभेदायोगादियमुभयतः पाशारज्जुः । ''सर्वं खल्विदं ब्रह्मे''त्यत्रापि सामानाधिकारण्यबलेन सर्वशब्दोपात्तपरिदृश्यमानघटादिप्रपञ्चस्य ब्रह्माभेद एव प्रतीयते । तच्च विरुद्धम् । जडाजडयोर्मिथ्यासत्ययोर्जगद्ब्रह्मणोरभेदस्य

युक्तिबाधितत्वात् ×"अनृतजडविरोधिरूपमि"ति वदता त्वयाऽप्यनङ्गीकाराच्च। अन्यस्य चामुख्यत्वात्। किंच यदि सर्वं सर्वारोपाधिष्ठानं ब्रह्मेत्यर्थस्तर्हि लाघवाद्बदराधिष्ठानं कुंडमिव सर्वाधिष्ठानं सर्वाधारो ब्रह्मेत्येवार्थोऽस्तु। किमनेनानर्थेनार्थेन। नच वाच्यं सर्वं ब्रह्मेत्यस्य ब्रह्म विना नास्तीत्यर्थ इति। अशब्दार्थत्वात्। अधिकार्थोऽयमिति चेत्। ऐक्यरूपवाक्यार्थसिद्धौ तथा तत्। तस्यैवोक्तरीत्याऽसिद्धेः। नहि "सिंहो देवदत्तः" "अग्निर्माणवकः" "यजमानः प्रस्तर" इत्यौपचारिकसामाधिकरण्यव्यवहारे सिंहादीन् विना देवदत्तादेरभावः सिद्ध्येत्। अन्यथा असद्ब्रह्मेति वा गगनकुसुमं ब्रह्मेति वा प्रयोगप्रसङ्गात्। किंच "सप्तमु प्रथमेति" सूत्रात् "सुपां सुलुगि"त्यादिसूत्राच्च छन्दसि सर्वविभक्तिषु प्रथमाविभक्तेर्निर्दिष्टत्वात् सर्वस्मिन् ब्रह्मेति वा ब्रह्मणि सर्वमितिवा "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" "आकाश एव तदोतं च प्रोतं चे"त्यादिश्रुत्यनुसारेणार्थसंभवात्। किमनेनानर्थकारिणाऽनुपपन्नार्थेन। अपिच "सर्वं समाप्नोषि ततोऽसि सर्वः" "सर्वस्य च परिज्ञानात्सर्वमेनं प्रचक्षत" इत्यादिस्मृतौ यतस्तत इत्युक्त्या पञ्चम्या च सर्वव्याप्तत्वादेः सर्वशब्दस्य प्रवृत्तिनिमित्तत्वावगमात् किमनेनामुख्येनार्थेन। व्याप्त्यर्थ एव हि सर्वमिति कर्मसार्थक्यम्। न समाप्त्यर्थकत्वे। तथासति सर्वं समापयसीति प्रयोगप्रसङ्गात्। ग्रन्थः समाप्नोति ग्रन्थं समापयतीत्येव विदां प्रयोगदर्शनात्। "स आत्मातत्त्वमसी"त्यत्रापि "स यथा शकुनिः सूत्रेण प्रतिबद्धः" "लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा" इत्यादावुक्तशकुनिसूत्रलक्षणोदकादिदृष्टान्तानुसारेणातत्त्वमसीति पदच्छेदेनार्थस्यैवोचितत्वात् न व्याहतसर्वप्रमाणविरुद्धमिथ्यात्वसिद्धिः। नदीसमुद्रयोरपि पतिपत्नीरूपयोर्लवणमधुररसयोश्च भेदावश्यंभावात्। उभयसमागमेऽपि क्षीरमिलितं नीरमिव निम्नगामधुरजलमपि पृथगेवास्ति। अन्यथाऽस्मादेव समुद्रादुद्धृत्य मेघवृष्टजलमाधुर्यस्याकस्मिकत्वप्रसङ्गात्। किंच सर्वज्ञासर्वज्ञतया सुखदुःखितया च विरुद्धयोर्जीवपरयोर्नैक्यम्। ऐक्यपरैतद्वाक्यबलाच्च विरुद्धांशत्यागस्यान्योन्याश्रयदुस्थतया दूषितत्वात्। किंच विरुद्धांशत्यागेनाखण्डचित्स्वरूपमात्रपरत्वे तत्त्वंपदाभ्यां चिच्चिदित्येवोक्तं स्यात्। तथाच पौनरुक्त्येन पदान्तरं

×संक्षेपशारीरके मङ्गलपद्यम्।

व्यर्थं स्यात् । जीवब्रह्मणोरैक्यं च न सिद्ध्येत् । तद्धि जीवचैतन्यमेव ब्रह्मचैतन्यमित्युक्ते कथंचित्सिध्येत् । विरुद्धजीवत्वांशत्यागेन स्वरूपमात्रपरतायां च नैतादृशो व्यपदेशोऽपितु चिच्चिदित्येवोक्तं स्यात् । तथाच कथमिदं वाक्यं जीवब्रह्मैक्यपरम् । ऐक्यविशिष्टार्थपरत्वेऽखण्डार्थत्वहानेश्च । नच वाच्यं भेदरहितार्थपरत्वेनैवाखण्डार्थत्वम् । अभेदवैशिष्ट्यपरं चेदं वाक्यं भेदरहितब्रह्माभिन्नाभेदपरमिति कुतोऽखण्डार्थत्वहानिरिति । अभेदस्य ब्रह्मभिन्नत्वे तद्वैशिष्ट्यस्यैवासंभवेन स्वरूपमात्रपरतायां पर्यवसानात् । भेदरहितेऽपि भेदव्यवहारसंपादकविशेषस्य निर्विशेषब्रह्मवादिनस्तन्मतेऽसंभवाच्च । स्वरूपमात्रप्रश्नोत्तरत्वाङ्गीकारेणाभेदविशिष्टस्वरूपपरतायामपृष्टपरिभाषणप्रसङ्गाच्च । सत्यत्वज्ञानत्वादीनामपि "एवं धर्मान्पृथक्पश्यन्नि"तिश्रुत्या ब्रह्माभिन्नधर्मपरत्वेन तद्वैशिष्ट्यपरतायामपि अखण्डार्थत्वाहान्यापत्त्याऽखण्डार्थवाक्यैरेव सार्वज्ञ्यादिसकलधर्मवैशिष्ट्यस्यापि सिद्धिप्रसङ्गाच्च । अभेदविरोध्यप्रकारत्वमखण्डार्थनिष्ठत्वमिति चेन्न । जीवब्रह्मचैतन्यनिरूपिताभेदस्यापि स्वाभेदविरोधितया तत्प्रकारकत्वस्याप्यभावापातेन भवदभिमतैक्यस्यैवासिद्धिप्रसङ्गात् । निरूप्यनिरूपकयोर्भेदावश्यंभावात् । चैतन्यानिरूपितैक्यस्य च यत्किंचिदैक्यत्वेनास्मदनिष्टत्वाभावात् । ब्रह्मनिष्ठसार्वज्ञ्यादिसकलसद्गुणानामप्यभेदाविरोधित्वेन तत्प्रकारकत्वस्याप्यापातात् । जीवनिष्ठासर्वज्ञत्वादिविरोध्याकारपरित्यागमात्रेणैव तदैक्यस्य सुवचत्वात् । सर्वज्ञासर्वज्ञयोर्हि नैक्यम् । एवंच निष्प्रकारकचरमप्रमाऽलाभेनापसिद्धान्ताच्च । किंचास्मादस्याभेद इतिवज्जीवचैतन्याद्ब्रह्मचैतन्यस्याभेदो ब्रह्मचैतन्याज्जीवचैतन्यस्याभेदो वा साधनीयः । यत्किंचिदभेदसाधनस्य प्रकृतानुपयोगित्वात् । तथाच प्रतियोग्यनुयोगिनोस्तयोर्भेदोऽप्यावश्यक इति कथं नैक्यमपि भेदप्रापकम् । कथं चैवमभेदविरोधि भवदैक्यं निरुक्ताखण्डार्थपरादपि वाक्यात्सिद्ध्येत् । अभेदस्थलेप्रतियोगित्वादिकस्यौपचारिकत्वमिति चेत् । न । उभयोरौपचारिकत्वाङ्गीकारादप्येकस्यैक्यस्यैवौपचारिकत्वसंभवात् । किंच भिन्नाभिन्नस्यापि वस्तुनो दर्शनात् भेदोऽप्यभेदाविरोध्येवेति तत्परतायामप्युक्ताखण्डार्थत्वाहानेः सोऽपि कथं न सिद्ध्येत् । किंचेदमखण्डत्वं तत्त्वमसीत्याद्यद्वैतश्रुत्यन्यथानुपपत्त्यैव कल्प्यते उत नेहनानेत्यादिश्रुत्यन्यथानुपपत्त्या । नाद्यः । भेदश्रुत्यन्यथानुपपत्त्या भेदविरोध्य-

प्रकारकत्वमखण्डार्थनिष्ठत्वमित्यपि कल्पनाप्रसङ्गात् । न द्वितीयः । इहेति ब्रह्म-चिन्मात्रमनूद्य तत्र सर्वं निषेधयन्त्याः श्रुतेःनिर्विशेषार्थत्वरूपाखण्डत्वस्यैव प्रापकत्वात् । नच तदपि । एतच्छ्रुतिसिद्धसर्वाभावरूपविशेषभावाभावाभ्यां व्याहतेरेव । भेदाभावे कथं सत्यत्वादिवैशिष्ट्यम् विशेषणविशेष्यभावस्य भेदघटितत्वादिति तु अभेदवैशिष्ट्येऽपि समम् । विशेषसमर्थनेन शङ्कानवकाशाच्च । कार्यकारणनिष्ठवाक्यानामप्यभिन्नार्थनिष्ठत्वेनाखण्डार्थनिष्ठवाक्यस्यैवाभावप्रसङ्गाच्च । भेदोऽप्यस्तीति चेत् किं तेन । अभिन्नार्थनिष्ठत्वस्य तथाप्यप्रतिघातात् । लाघवात्तावन्मात्रस्यैवाखण्डार्थत्वोपयोगित्वसंभवाच्च । किंच न तावज्जीवत्वविशिष्टचैतन्यस्य ब्रह्माभेदः । विरोधात् । नापि तदुपलक्षितचैतन्यस्य । उपलक्षकस्यापि काकादेरिव व्यावर्तकत्वावश्यंभावेनैक्यविरोधित्वात् । नहि काकोपलक्षितगृहस्य तदनुपलक्षितगृहांतरैक्यं दृष्टम् । तस्माज्जीवत्वं यत्रारोपितं तस्यैव चैतन्यस्यैक्यं वाच्यम् । तच्च न परस्याप्यनिष्टम् । जीवे जीवत्वारोपासंभवेन कृष्णरामादिष्वेवाज्ञदृष्ट्या तदारोपो वक्तव्यः । तस्य च ब्रह्मैक्यं कस्यानिष्टम् । अपिच यच्छब्दतच्छब्दयोर्हेत्वर्थकयोः सर्वजनसिद्धत्वात् हे श्वेतकेतो त्वं तत्तस्मात् ब्रह्मणो हेतोरसीति अत एवैतदात्म्यमित्युक्तब्रह्मकारणकत्वार्थकस्य मुख्यस्यैव संभवात् किमनया लक्षणया । किंच पदद्वयलक्षणातोप्येकपदलक्षणाया एव लघुत्वात् । हे श्वेतकेतो त्वं तत तदधीनोऽसीत्यर्थसंभवात् किमनेन द्वासुपर्णेत्यादिश्रुतिविरुद्धार्थेन । नच सा प्रत्यक्षसिद्धभेदानुवादिनीति वाच्यम् । तथापि भेदरूपार्थस्यापरिक्षयात् । नहि प्रत्यक्षसिद्धमग्नेर्हिमभेषजत्वं श्रुत्याऽनूदितमिति नासौ हिमभेषजम् । किंचानुवादमात्रेणाप्रामाण्यमुत दूषणार्थमनुवादेन । नाद्यः । स्वोक्तस्थिरीकरणाय साक्षिवाक्यानुसरणस्य सर्वैः क्रियमाणत्वात् । न द्वितीयः । इति यत् तन्नेति तल्लिंगाभावात्प्रत्युत "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" इति विरुद्धधर्मकथनेन तस्यैव दृढीकरणात् । न ह्येतदप्यनुवादार्हम् । "अनश्नन्नन्यो अभिचाकशीती"त्यस्य प्रत्यक्षासिद्धत्वात् । "अन्यमीशमस्य महिमानमिति वीतशोक" इति अन्यत्वज्ञानेन दुःखनिवृत्तिरूपमोक्षफलश्रवणाच्च न दूषणार्थमनुवादोऽयम् । ऐक्यवाक्यस्याद्याप्यनिर्णीतार्थत्वेन दूषणाभावाच्च । तस्याप्युक्तरीत्या स्वसमयप्राप्तैक्यानुवादकत्वसंभवाच्च ।

भ्रांतनिषेधकवाक्यस्य प्रत्यक्षानुगृहीताभ्रांतविधायकवाक्यमिव प्रत्यक्षानुगृहीतभेद-वाक्यमेव च तद्बाधकमस्तु । नाप्यविद्यावच्छिन्नचैतन्यनिष्ठाविद्यकभेदपरा सेति वाच्यम् । "न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुराऽसुरार्चिताः" इति माया-निवृत्तिदशायामपि भेदस्य श्रूयमाणत्वात् । नच बहुतरमायानिवृत्तिपरं तद्वाक्यम् । अल्पीयसी तु माया तत्राप्यस्तीति वाच्यम् । घटत्वावच्छेदकावच्छिन्नयत्किंचि-त्सद्भावे रक्तघटो नास्तीति विशिष्य निषेधसंभवेऽप्यत्र घटो नास्तीति सामान्यनि-षेधादर्शनेन मायात्वावच्छेदकावच्छिन्नयत्किंचित्सद्भावे न यत्र मायेति सामान्य-निषेधासंभवात् । "किमुतापर" इति मायानिमित्तककामक्रोधाद्यभावे कैमुत्यं वदता सर्वथा मायाभावस्य प्रागवक्तव्यत्वाच्च । किंच लक्षणायां साक्षाद्गृहीतसङ्गतिक-पदार्थस्यैव परित्यागः । गङ्गापदेन प्रवाहं परित्यज्य तीरस्यैव व्यपदेशान्मुख्यार्थ-योगस्य प्रयोजनस्यैव लक्षणोपयोगिनः पदबोध्यताभावात् । गौण्यां त्वेकविभक्ति-कत्वरूपसामानाधिकरण्यार्थस्य तदानीमेव पदान्तरसमागमवशाद्विशिष्य ग्राह्य-स्यैक्यमात्रस्य प्रच्यावनम् । नतु सिंहदेवदत्तयोरपि । तथाच साक्षात्पदार्थप्रच्या-वनरूपतल्लक्षणातोऽपि विभक्त्यर्थमात्रप्रच्यावनरूपगौण्याश्रयणस्यैवोचितत्वात् । तत्त्वं तत्सदृशोऽसीति परमं साम्यमुपैतीत्यादौ निरूपितब्रह्मसादृश्यपरमेवेदं वाक्य-मस्तु । एवंच "स्तब्ध एयायेति" ति तत्रैवोक्तं श्वेतकेतोस्स्तब्धत्वं उद्दालकाख्य-गुरूपसत्तिस्तन्मुखात् श्रवणं ब्रह्मभजकतापसत्वं च युक्तमेव स्यात् । साक्षात्सर्वज्ञ-ब्रह्मरूपत्वे तु कथमिदं युज्येत । तस्मात्स्वरूपोच्छेदकजगन्मिथ्यात्वे न काचिदपि श्रुतिः प्रमाणम् ॥ * ॥

इति श्रीमद्वादिराजयतिकृतं विवरणत्रणं समाप्तम् ॥

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवः प्रीयताम् ॥

॥ श्रीकृष्णार्पणमस्तु ॥

---

॥ श्रीः ॥

श्रीमद्वादिराजीयग्रन्थप्रकाशनसमितौ सदस्याः

१. न्यायविद्वान् तर्ककेसरी इत्यादि बिरुदविराजमानाः पडम्नूरु नारायणाचार्याः उडुपि श्रीमन्मध्वसिद्धान्तप्रबोधिनी संस्कृतमहापाठशालायां वेदान्तप्रधान पण्डिताः समितिप्रधानाध्यक्षाः

२. वेदान्तरत्न प्रवचनधुरीण इत्यादिबिरुदभाजः कट्टे श्रीनिवासाचार्याः श्रीमदुत्तरादिमठीय उडुपि श्रीमन्मध्वसिद्धान्तचन्द्रिकापाठशालायाः प्रधानपण्डिताः समित्यध्यक्षाः

श्री पेजावरमठीय प्रधानसचिव श्रीमन्निम्ब्याळ नारायणाचार्याः कोशाध्यक्षाः

४. द्वैतवेदान्तविद्वान् वेदान्तशिरोमणि अग्रहार नारायण तन्त्रिणः उडुपि श्रीमन्मध्वसिद्धान्त प्रबोधिनी संस्कृतमहापाठशालायां वेदान्तपण्डिताः कार्यदर्शिनः

५. साहित्यशिरोमणि विद्याभूषण बि. श्रीनिवास भट्टाः उडुपि श्रीमन्मध्वसिद्धान्तप्रबोधिनी संस्कृतमहाशालायां साहित्यप्रधानपण्डिताः उपकार्यदर्शिनः

Printed by K. Raghavendra Rao, at Majestic Press, Udipi & Published by Sri A. Narayana Tantry Secretary Sri Vadirajiya Grantha Prakashana Samithi, Udipi.

# श्रीमद्वादिराजीयग्रन्थप्रकाशनसमिति उडुपि

श्रीमद्भाविसमीरवादिराजपूज्यचरणैर्विरचिताः
एतावत्पर्यन्तमधोनिर्दिष्टसमित्या मुद्रापयित्वा विक्रयाय सज्जाः

| संस्कृतग्रन्थाः | मूल्यं च |
| --- | --- |
| १. श्रीमन्महाभारततात्पर्यनिर्णयः श्रीमद्वादिराजीयभावप्रकाशिकाटीकासहितः | मूल्यं ६–०–० |
| २. गुर्वर्थदीपिका श्रीमन्न्यायसुधाटिप्पणी | अर्धमूल्यं १-१२-० |
| ३. स्तोत्ररत्नमाला (अधिकरणनामावल्या एकादशीनिर्णयेन-भूगोळवर्णनेन च सहिता) | मूल्यं १–२–० |
| ४. गुर्वर्थदीपिका तत्वप्रकाशिकाटिप्पणी | अर्धमूल्यं १–८–० |
| ५. सभाष्यसटीकेशावास्योपनिषदः टिप्पणी<br>सभाष्यतलवकारोपनिषदः टिप्पणी<br>सभाष्यतैत्तिरीयोपनिषदः टिप्पणी (अपूर्णा) | मूल्यं ०·१२·० |
| ६. उपन्यासरत्नमाला (दशसूपन्यासेषु त्रयः उपन्यासाः) | मूल्यं ०–६–० |
| ७. कल्पलता | मूल्यं ०–८–० |
| ८. विवरणव्रणम् | मूल्यं १–४–० |

श्रीभाविसमीरश्रीमद्वादिराजपूज्यचरणमाहात्म्यप्रतिपादकग्रन्थाः

| | |
| --- | --- |
| १. श्रीवादिराजगुरुवरचरितामृतम् | मूल्यं ०–४–० |
| २. ऋजुत्वमण्डनम् | |

प्रेषणव्ययः पृथगेव. तत्सहितं मूल्यं पुस्तकापेक्षिणः यदि प्रेषयेयुः, तर्हि रिजिस्टर् द्वारा, अथवा वी. पि. द्वारा वा पुस्तकं प्रेष्येत.

पुस्तकप्राप्तिस्थानम्:—

श्रीवादिराजीयग्रन्थप्रकाशनसमितेः कार्यदर्शी,
अग्रहार नारायण तन्त्री, विद्वान्, शिरोमणिः
पण्डितः संस्कृतकालेज, उडुपि, द. क.